स्व. श्री शिवसागर दि. जैन ग्रन्थमाला पुष्प

# दशधर्मविशदविवेचनम्

संकलित एवं सम्पादकश्च

परमपूज्य १०८ आचार्य श्रीअजितसागरः

प्रकाशक

स्व. १०८ आचार्य श्रीशिवसागर दि. जैन

ग्रन्थमाला (शान्तिवीरनगर)

श्रीमहावीरजी (राजस्थान)

प्रथमावृत्तिः १०००    वीरनिर्वाण सं. २५१३

परमपूज्य, प्रातःस्मरणीय, महान् तपस्वी, वि. जैनाचार्य
स्व० श्री १०८ श्री शिवसागरजी महाराज



संयमस्य विधातारं, स्वर्गस्थं सूरिसन्मणिम् ।
यतीशं यतिभिर्मान्यं, परोक्षं प्रणमाम्यहम् ॥

॥ श्री वीरशिवसागराचार्याभ्यां नमः ॥

## बाल ब्रह्मचारी, अभीक्ष्णज्ञानोपयोगी, परमपूज्य
## श्री १०८ उपाध्याय मुनि श्री अजितसागरजी महाराज



भोः पाठकार्य ! वरभव्य ! नमोस्तु तुभ्यं ।
साहित्यशास्त्रनिपुणाय नमोस्तु तुभ्यं ॥
स्याद्वादधर्मध्वजनव्य ! नमोस्तु तुभ्यं ।
श्रीअजितसागरमुनीन्द्र ! नमोस्तु तुभ्यं ॥

卐

दीक्षा गुरु : स्व. आचार्य १०८ श्री शिवसागरजी
दीक्षा स्थल : सीकर सन् १९६१

# भूमिका

महावीरजिनं नत्वा, प्रणम्याऽजितसागरम्,
दशलक्षणधर्मस्य, लिखामि भूमिकां वराम्,

सकलसिद्धान्तसागरं मथित्वा निस्सारितः भवसंसारिजीव-
सुखावहः मोक्षमार्गप्रकाशको दशधर्मविवेचकोऽयं ग्रन्थरत्नं,
"यथा नाम तथा गुण." इत्युक्तिं सार्थकं करोति । निरन्तरज्ञाना-
भ्यासरतेनाभीक्ष्णज्ञानोपयोगिना दिगम्बर रूपधारिणाऽजितसा-
गरमुनिवरेण, पूर्वाचार्यविरचितानेकग्रन्थेभ्योऽतिपरिश्रमेण
संगृहीतः सम्पादितश्चायं ग्रन्थो भारतवासिसमस्तभव्यजीव
कण्ठाभरणो भविष्यतीत्याशासेऽहं । यद्यपि दशलक्षणधर्मप्ररूपकाः
विविधग्रन्था विद्यन्ते, किन्तु तेषु ग्रन्थेष्वयं महतीं विशेषतामाद-
ति नात्र संशयः । धर्मस्य स्वरूपं तथा भेदप्रभेदाः विविधकथो-
दाहरणयुक्तेनाऽस्य ग्रन्थ. अपूर्वं वरीवर्ति न चात्र सन्देहोऽ-
स्ति । यथावनितलस्थानिस्सारितकिट्टकालिमादियुक्तस्वर्ण-
पाषाणमग्नितापताडनाद्यनेक प्रक्रियामापद्य शुद्धस्वर्णं प्रजा-
यते तथा च कुम्भदग्धभूय दधिवत् मन्थनादिप्रक्रियां
प्राप्य नवनीतपर्यायमभिलभ्य पुनराग्नितापेन शुद्धघृतं जायते
तथैव संसारी प्राणी कर्ममलसम्बन्धेनाशुद्धावस्थां प्राप्तः पुण्यो-
दयसंप्राप्तमनुष्यपर्यायः चतुर्विधपरिग्रहं परित्यज्य निर्ग्रन्थ-
मुद्रां समासाद्य ज्ञानध्यानतपोरूपचारित्ररूपपवनेन ज्वालाय-
माना कर्मेन्धनं दहति स एव योगी मोक्षमार्गप्रकाशक-
कान् ज्ञानदर्शनगुणप्रकटीकरणकारणभूतान् चोत्तमक्षमादि

दशधर्मान् यदाऽऽधारयति तदैव सर्वकर्ममलक्षयं कृत्वा शुद्धं-मोक्षमवाप्नोति, उत्तमक्षमादिदशधर्मधारणमेव मोक्षप्राप्तेः प्रधानोपायो विद्यते, तेन विना न मोक्षो स्यात् ।

उत्तमक्षमामार्दवार्जवशौचसत्यसंयमतपस्त्यागाकिञ्चन्यब्रह्मचर्येति दशविधधर्मः संसारजलधितारकः पतितपावनश्च विद्यते ।

जैनसामाजिके दशलक्षणधर्मस्यातिमहत्त्वमस्ति । अस्मिन् ग्रन्थे दशधर्मविवेचनं महती विशेषताऽस्ति संस्कृतभाषायां विविधोदाहरणपूर्वकवर्णनैः सुमधुरभाषासौष्ठवेनापूर्वोऽयं ग्रन्थो यथा क्षमाधर्मवर्णने क्षमायाः स्वरूपं क्षमायाः प्रशंसा क्षमाधर्म प्रतिपालकश्रीदत्तविद्युच्चरचिलातिपुत्रकार्तिकेयधन्यकुमारसुकुमालादिमुनीनां सांकेतिकसंक्षिप्तोदाहरणादिनिरूपणेन तथा च क्रोधकषायफलप्रतिपादकद्वैपायनमुन्युदाहरणेन विषयवर्णनमद्वितीयंमभवदिति मे मतं । तथैव मार्दवार्जवशौचसत्यसंयमतपस्त्यागाकिञ्चन्यब्रह्मचर्यादिप्रत्येकधर्मस्य स्वरूप भेदफलादि सोदाहरणप्रतिपादकोऽयग्रंथोऽपूर्वविशेषतामाप्नोति । मादृशा स्वल्पबुद्धियुताः अस्य ग्रन्थस्य संसकलनशैलीप्रशंसां लिखितुमक्षमाः । अयं किल बहुश्रुताभ्यासी अजितसागरोपाध्यायःससारभोगेन्द्रियविषयविरतो शास्त्राध्ययनरतो मुनिपुङ्गवोऽभीक्ष्णज्ञानोपयोगी स्वपरकल्याणरतः बालब्रह्मचारी संस्कृतभाषाविशारदः साहित्यशास्त्रवेत्ता चास्य ग्रन्थस्य संग्राहकः संपादकश्च निरन्तरज्ञानध्यान पठनपाठनादिरतोऽयं मुनिवरेण्यश्चैकमपि क्षणं व्यर्थं न गमयति । इत्यलं विस्तरेण विरम्यते मया ।

शुभकामना

जयतु जयतु योगी सर्वसङ्गाद्विरक्तो
मुनिजननिलयेऽस्योऽभीक्ष्णज्ञानोपयोगी ।
अजितजलनिधिर्यो भव्यजीवैकबन्धुः,
भवतु जिनप्रसादात्तस्य चारित्रवृद्धिः ॥

महेश भवन — गुरुचरणचञ्चरीक,

ऋषभदेव — प० महेन्द्रकुमारो "महेशः" शास्त्री

दिनांक ८/५/८७

## दशधर्मविशदविवेचनोपरि द्विशब्दः

परमपूज्य प्रातःस्मरणीय स्वर्गीय १०८ आचार्य श्री शिवसागरस्य परमशिष्येण श्रीअजितसागरेण, सकलितः सम्पादितश्च प्रस्तुतग्रन्थः संस्कृतभाषाऽभिज्ञानां कृते स्वाध्यायोपयोगी, वर्तते, जिज्ञासुजनानां बोधकृते प्रचुरग्रन्थानामध्ययनं विधाय संकलितोऽयं ग्रन्थः पाठकगणोऽस्य ग्रन्थस्य पठनपाठनचिन्तनमननैः कृत्वा आत्मपरिणामनिर्मलं कृत्वा स्वर्गमोक्षसुखं प्राप्नोस्विति द्विशब्दलेखकस्य भावनाऽस्ति ।

ऋषभदेव — गुरुचरणचञ्चरीकः

दिनांक८/५/८७ — पं. मोतीलालमार्तण्डः

# दशधर्मविवेचनस्य विषयसूची



---

*नोट*— प्रेस संचालिका— संस्कृत पुस्तक की छपाई मैंने प्रथम बार की है अतः पाठकगण क्वचित् स्थाने श्लोक संख्या, और गलतियों को क्षमा करके विद्वान सुधार कर पढ़े

मुद्रक— *मनोरमा जैन* ऋषभदेव

# दशधर्मविवेचनम्

## उत्तमक्षमाधर्मः

## स्व. वीरशिवाचार्याभ्यां नमः

मङ्गलाचरणम्

स जयति जिनदेवः सर्व्वविद् विश्वनाथो,
वितथवचनहेतु क्रोधलोभादिमुक्तः ।
शिवपुरपथपान्थ–प्राणि पाथेय मुच्चैः,
जनितपरमशर्मा येन धर्मोऽभ्यधायि ॥१॥

क्षान्त्यार्जवादि गुणगण सुसाधनं. सकललोकहित हेतु।
शुभधामनि धातार, वन्दे धर्मं जिनेन्द्रोक्तम् ॥२॥

**क्षान्तिः** :— सति सामर्थ्ये जडजन कृत दुर्वचनादीन् आमर्षण क्षान्तिः । तपोवृहणकारण शरीरा.त्तिनिमित्तं निरवद्याहारान्वेषणार्थं परगृहाणि गच्छतो भिक्षो दु ष्ट मिथ्यादृग् जना क्रोशनात् प्रहसनाऽवज्ञाऽनुताडन यष्टिमुष्टिप्रहारशरीर व्यापादनादीनां क्रोधात्पत्ति निमित्तानां सन्निधाने (सति) कालुष्या भावः क्षमा सदैव कर्तव्या । असंयतै मिथ्यादृक् शत्रुदुष्टाद्यै उपद्रवे सत्यपि अपकीर्तिभयात् ताडनादिकं सह्यते तदिहलोकार्थं भवति परमार्थंसिद्धये न भवति । अपकीर्तिभयात् ताडनादिसहनरूपा या क्षमा सा तु सामान्यपुरुषाऽऽश्रिता प्रोक्ता, किन्तु शास्त्रविषर्याद,

दृष्टिविषद्वर्यादीनां सामर्थ्ये सत्यपि महात्मभिः प्राणनाशकरो दुर्जनैः कृतघोरोपसर्गो यः सह्यते सा धर्मरत्नखनिः उत्तमक्षमा उक्ता । क्षम्यते क्षमते वा या सा क्षमा सहनशीलता । प्रकृष्टप्रशमः क्षमाधर्मः तथा चोक्तं

— क्षमा प्रशंसामाह —

येन केनापि दुष्टेन, पीडितेनाऽपि कुत्रचित् ।
क्षमा त्याज्या न भव्येन, स्वर्गमोक्षाभिलाषिणा ॥३॥

यः क्षाम्यति क्षमोऽप्याशु, प्रतिकर्तुं कृतागसः ।
कृतागस तमिच्छन्ति, क्षान्तिपीयूषजुषः ॥४॥

कालुष्यसन्निधानेऽपि, द्विषदाक्रोशनादिभिः ।
अकालुष्यं मुनेः सद्भिः तितिक्षेति विवक्षिता ॥५॥

निकारो यद्युदारोऽपि, कुतश्चिन् नीचतो भवेत् ।
निश्चितं सोऽपि सोढव्यो महाबलयुतैरपि ॥६॥

अतिकुपितमनस्के कोपनिष्पत्तिहेतौ,
विदधति सति शत्रौ विक्रियां चित्ररूपां ।
वदति वचनमुच्चैर्दुःश्रवं कर्कशादि,
कलुषविकलता या, तां क्षमां वर्णयन्ति ॥७॥
घोरोपसर्गसम्पातं, वधबन्धकदर्थनं ।
सह्यते यच्च मुक्त्यर्थं, सा क्षमोक्ता मुमुक्षुभिः ॥८॥

क्षान्तिरेव मनुष्याणां, मातेव हितकारिणी ।
माता कोपं समायाति, क्षान्ति र्नैव कदाचन ॥९॥

क्षमया क्षीयते कर्म, दुःखदं पूर्वसञ्चितं ।
चित्तं च जायते शुद्धं, विद्वेषभयवर्जितम् ॥१०॥

पुण्यकोटिसमं स्तोत्रं, स्तोत्रकोटिसमो जपः ।
जपकोटिसमं ध्यानं, ध्यानकोटिसमा क्षमा ॥११॥

कस्यचित् सम्बलं विद्या, कस्यचित् सम्बलं धनं ।
कस्यचित् सम्बलं मार्त्यं, मुनीनां सम्बलं क्षमा ॥१२॥

नरस्याभरणरुपं, ज्ञानस्याभरणं गुणः ।
गुणस्याभरणं ज्ञानं, ज्ञानस्याभरण क्षमा ॥१३॥

पातिव्रत्यं स्त्रिया रूप, पिकीनां रूपकं स्वरः ।
विद्यारूपं कुरूपाणां, क्षमारूपं तपस्विनाम् ॥१४॥

मनस्याह्लादिनी सेव्या, सर्वकालसुखप्रदा ।
उपसेव्या त्वया भद्र, ! क्षमा नाम कुलाङ्गना ॥१५॥

प्राणात्ययेऽपि सम्पन्ने, प्रत्यनीकप्रतिक्रिया ।
मता सद्भिः स्वसिद्धयर्थं, क्षमैका स्वस्थचेतसाम् ॥१६॥

क्षमागुणान् प्रवक्षामि, संक्षेपेण तु श्रूयतां ।
धर्मकामार्थमोक्षाणां, क्षमा कारणमुच्यते ॥१७॥

क्षमा शान्तिः क्षमा शस्त्रं, क्षमा श्रेयः क्षमा धृतिः ।
क्षमा चितं च वित्तं च, क्षमा रक्षा क्षमा बलम् ॥१८॥
क्षमा नाथः क्षमा त्राता, क्षमा माता क्षमा सुहृत् ।
क्षमा लब्धिः क्षमा लक्ष्मीः, क्षमा शोभा क्षमा शुभम्॥१९
क्षमा श्लाघ्या क्षमाचारः, क्षमा कीर्तिः क्षमा यशः ।
क्षमा सत्यं च शौचं च, क्षमा तेजः क्षमा रतिः ॥२०॥
क्षमा श्रेयः क्षमापूजा, क्षमा शय्या क्षमा हितः ।
क्षमा दानं पवित्र च, क्षमा माङ्गल्यमुत्तमम् ॥२१॥
एक एव क्षमादोषो, द्वितीयो नोपलभ्यते ।
यदेनं क्षमया युक्तं, अशक्तं मन्यते जनैः ॥२२॥
सत्यदुर्गसमारूढं, शीलप्राकारवेष्टितं ।
क्षमाखड्गयुतं नित्यं, दुर्जनः किं करिष्यति ॥ २३ ॥
क्षमाखड्गः करे यस्य, दुर्जनः किं करिष्यति ।
अतृणे पतितो बन्हिः, स्वयमेवोपशाम्यति ॥ २४ ॥
क्षमाबलमसक्तानां, शक्तानां भूषणं क्षमा ।
क्षमा वशीकृतो लोकः, क्षमया किं न साध्यते ॥ २५ ॥
क्षमासम तपो नास्ति, क्षमातुल्यं न सद् व्रतं ।
क्षमार्भं न हितं किञ्चित्, क्षमाभं न जीवितम् ॥ २६॥

धर्मध्यानबलेन समाधिना कालं कृत्वा सर्वार्थसिद्धि गतः ॥३॥

**स्वामिकार्तिकेय मुनिः—** स्वामिकार्तिकेयमुनिः क्रौञ्चराजकृतोपसर्ग सोढवा साम्यपरिणामेन मरणं कृत्वा देवलोक प्राप्तः ॥४॥

**गुरुदत्तमुनिः-** गुरुदत्तमुनिः कपिलब्राह्मण कृतोपसर्गं सोढ्वा परमसमाधि प्राप्य केवलज्ञानमुत्पाद्य मोक्ष गत. ॥५॥

**धन्यकुमारमुनिः—** धन्यकुमारमुनिः चक्रराजकृतोपमर्ग सोढ्वा परमक्षमाधर्म प्राप्य शुक्लध्यानेन कर्मक्षय कृत्वा मोक्षं गत· ॥६॥

**पञ्चशतमुनयः—** पञ्चशतमुनय दण्डकराजेन ईक्षुयन्त्र मध्ये पीलिताः समाधिना मरण कृत्वा सिद्धि गताः ॥७॥

**चाणाक्यादिपञ्चशत मुनयः :—** मन्त्रिकृतोपसर्ग सोढ्वा शुक्लध्यानेन कर्मक्षय कृत्वा सिद्धि गताः ॥८॥

**सुकुमाल स्वामीः—** शृगालीकृतोपसर्गं सोढ्वा शुभध्यानेन मरणं कृत्वा देवो जातः ॥९॥

**सुकौशल मुनिः—** मातृचरो व्याघ्री कृतोपसर्गं सोढ्वा शुभध्यानेन समाधि प्राप्य सर्वार्थसिद्धि गतः ॥१०॥

**श्रीपणिकमुनि :—** श्रीपणिकमुनि जलोपसर्गं सोढ्वा मुक्ति गत ॥११॥

**द्वात्रिंशच्छ्रेष्ठिपुत्राः**— नदीप्रवाहे पतिताः सन्तः शुभध्यानेन मरणं कृत्वा स्वर्गे देवा जाताः ॥१२॥ इत्यादि बहवो जीवा अनेक प्रकारोपसर्गाणि सोढ्वा उत्तमक्षमां प्राप्य शुभां गतिं श्रिताः। यदि कश्चित् कुधीः साधोर्निन्दां कुर्यात् तदा मुनिः हृदि एवं चिन्तयेत् एते दोषा मयि सन्ति तर्हि तु सत्यभाषणादस्य दोषो न, यदि वा दोषाभावेऽपि एष अज्ञानाद् मम दोषान्वक्ति मारयति न मां, न मे सद्गुणान् गृह्णाति इत्यादि चिन्तनै र्मुनिना निन्दनादिकं सोढव्यं साक्षमा । तथाचोक्तं

दत्तेशापं विना पापं, नाऽयं मेऽस्तीति सह्यते ।
कृपाकृत्येत्ययं पापं, वराकः कथमर्जति ॥२८॥
सत्यपि सर्वतो दोषे, सहनीयं मनीषिणा ।
विद्यते मयि दोषोऽयं न, मिथ्याऽनेन जल्पितम् ॥२६॥

यदि कश्चित् क्रुधा परोक्षे मुनिमाक्रोशति तदा क्रोधाग्निजलदोपमेन मुनिनेति ध्येयमयं परोक्षे मामाक्रोशति प्रत्यक्षे तु न, अयमपि मम लाभ एव इति मत्वा तत्कृतं आक्रोशनं मया सोढव्यं । यदा कश्चिद् दुरात्मा प्रत्यक्षे आक्रोशति तदा सन्मुनिना स्वक्रोधशान्तये इति चिन्तनीयं । अयं शठः मां केवल गालीं ददाति न तु हन्ति, गालीभिः किं मेऽशुभानि व्रणानि जायन्ते, मां निन्दतोऽस्यैव हानि र्न मे, इति विचिन्त्य मुनिना शान्त

भावेन दुर्वचः सोढव्यम् । अथवा कश्चिदज्ञो कुधी साधुं ताडयति तदा साधुना चिन्ते इति चिन्तनीयं, अयं कुधी मां हन्त्येव मञ्जसा मत्प्राणान् तु न हरति, अथक्षयाद् मेऽस्माल्लाभ एव जातो न हानि जता । वाऽत्राय वधबन्धाद्यै मे पापं हरति स्फुटं अत एव हानि स्तु अस्यैव मम तु उज्जिता वृद्धिः । अथवा प्राग्भवे मयाऽयं पुरुषस्ताडितस्ततोऽयं मां ताडयति, अस्य कश्चिद् दोषो न । वा प्राग्भवे मया यत् कृतं तन्मयैव भुज्यते । तथा चोक्तं

प्राङ् मया यत् कृतं कर्म, तन्मयैवोपभुज्यते ।
मन्ये निमित्तमात्रोऽन्यः, सुखदुःखोद्यतो जनः ।।३०।।

स्वयं कृतं कर्म यदात्मना पुरा, फलं तदीयं लभते शुभाशुभं ।
परेण दत्तं यदि लभ्यते स्फुटं, स्वयं कृतं कर्म निरर्थकं तदा।३१।

प्राग् वाऽस्मिन् वा विराध्यन्निममहमबुधः, किल्विषं यद् बबन्ध,
क्रूरं तत्पारतन्त्र्याद्, अनुभवमयमधुना, मां शपन् कामिमाज्जन् ।
निघ्नन् वा केन वार्यः प्रशमपरिणतः स्याथवाऽवश्यभोग्यं,
भोक्तुं मेऽद्यैव योग्यं, तदिति वितनुता, सर्वथाऽर्येस्तितिक्षाम् ।।३२।

अत्रैव दुःखविकारिकं निमित्तमात्रं मन्ये, चेन् मदीयमपि चित्तं कोधाग्निसन्निधि व्रजेत् तदाऽस्याज्ञस्य विदो मे को विशेषः ।

तथाचोक्तं

यदि प्रशमर्यादां, भित्वा रुष्यामि शत्रवे ।
उपयोगः कदाऽस्य स्यात्, तदा मे ज्ञानचक्षुषः ।।३३।।

यद्यहं क्रोधहालाहलाक्रान्तं पुमांसं निर्विषीकर्तुं असमर्थस्तर्हि चिराभ्यस्तसमभावस्य किं फलमतः सांप्रतं क्रोधविषं पिबामि ।

पूर्वं मया बहुकष्टैयः शमाऽभ्यस्तः तस्याधुना वैफल्यं जायते, यदि कोप करोमि, इत्यादि चिन्तनैराशु चित्तं स्थिरीकृत्य साधुना दुर्जनोद्भवं निखिलताडनमारणादिकं सोढव्यं । तथाचोक्त

चिराभ्यस्तेन किं तेन, शमेनास्त्रेण वा फल ।
व्यर्थीभवति यत्कार्ये, समुत्पन्ने शरीरिणाम् । ।३४।।

यदि कश्चिच्छुद्रः साधोः प्राणान् गृह्णाति तदा यतिना कोपाग्निनोरदमिदं चिन्तनोयमय मम प्राणान् आदत्ते शिवप्रदं धर्म नादत्ते। वाऽय वधाद्यं जंराजर्जरित काय हत्वा दिव्यं नूतनम् गुणाकर वपुर्दत्ते । स मे वरः सुहृत् कथं न । यद्यय मां पापकर्मभ्यो वधाद्यं नं मा मोचयेत् तदा तेभ्यो मोक्षः कथं स्यात् इति हेतो रेष मे हितकरः य कारागारनिभात् कायादाशु मा मोचयित्वा स्वर्गादौ स्थापयेत् सः कथ शत्रु रुच्यते। इत्यादि सद्विचाराद्यैः प्राणनाशेऽपि साधुना सर्वथैव क्षमा कार्या जातुचित् कोपो न कार्यः । कोपदोषानाह—

क्रोधो नाशयते धर्मं, विभावसुरिवेन्धनं ।
पापं च कुरुते घोर,-मिति मत्वा विषह्यते ।। ३५ ।।

अज्ञानकाष्ठजनित, स्त्वमानवातैः
संधुक्षितः परुषवाग्गुरुविस्फुलिङ्गः ।
हिंसाशिखोऽपि भृशमुत्थितवैरधूमः,
क्रोधाग्निः उद्दहति धर्मवनं नराणाम् ।। ३६ ।।

क्रोधः प्राणहरः शत्रु, क्रोधो मित्रमुखो रिपुः ।
क्रोधोऽसि महातीक्ष्णः, सर्वं क्रोधोऽपकर्षति ॥३७॥

तपते धरते चैव, यच्च दानं प्रयच्छति ।
क्रोधो हरति सर्वस्वं, तस्मात् क्रोधं विवर्जयेत् ॥३८॥

यथान्ध कुपितो हन्याद् च्चैवाग्रे व्यवस्थित ।
क्रोधान्धोऽपि तथैवात्र, तस्मात् तं दूरतस्त्यजेत् ॥३९॥

क्रोधो विजितदावाग्नि, स्वस्यान्यस्य च घातकः ।
दुर्गते कारण क्रोध., तस्माद् वर्ज्यो विवेकिभिः ॥४०॥

श्रामण्यपुण्यतरुरत्र गुणौघशाखः,
पत्रप्रसूननिचितोऽपि फलान्यदत्वा ।
याति क्षय क्षणात एव घनोग्रकोपात्,
दावानलात् त्यजन त यतयोऽत्र दूरम् ॥४१॥

राग दृशात्रपुषि कम्पमनेकरूप,
चित्ते विवेकराहतानि विचिन्ततानि ।
पुंसामभागगमन श्रमदुःखजात ।
कोप: करोति महसा मदिरा मदश्च ॥४२॥

यः कुप्यति प्रतिपद भुवि निर्निमित्त—
माप्तोऽपि नेच्छति जनः सह तेन सख्यम् ।
मन्दानिलोल्लसित पुष्पभरानतोऽपि ।
किं सेव्यते विषतरु मंधुपव्रजेन ॥४३॥

मैत्रीयशोव्रततपो नियमानुकम्पा,

सौभाग्यभाग्यपठनेन्द्रियनिर्भयाद्याः।
नश्यन्ति कोपपुरुवैरहताः समस्ताः
तीव्राग्नितप्तरसवत् क्षणतो नरस्य ॥४४॥

कोपः करोति पितृमातृसुहृज्जनाना—
मप्यपियत्वमुपकारी जनापकारम्।
देहक्षयप्रकृतकार्यविनाशन च,
मत्वेनि कोपवशिनो न भवन्ति भव्या. ॥४५॥

पुण्य चित व्रततपोनियमोपवासैः,
क्रोधः क्षणेन दहतोन्धनवद् हुताश।
मत्वेति तस्य वशमेति न यो महात्मा,
तस्याभिवृद्धिमुपयाति नरस्य पुण्यम् ॥४६॥

तृष्णा विवर्धयति धैर्यमपाकरोति,
प्रज्ञा विनाशयति सजनयत्यवाच्यं।
संतापयेत् स्ववपुरिन्द्रियवर्गमुग्रः,
पित्तज्वरप्रतिनिधिः पुरुषस्य कोपः ॥४७॥

क्रोधस्तापकरश्चोभे, सर्वस्योद्वेगकारकः।
क्रोधवैरानुजनकः, क्रोधः सुगतिनाशकः ॥४८॥

यथा छेदनैः कर्तनै र्दाहैश्चन्दनं विक्रियां न याति,

तथा चोक्तं

दग्ध दग्ध त्यजति न पुन र्दिव्यवर्णं सुवर्णं
घृष्ट घृष्ट त्यजति न पुनश्चन्दनं चारुगन्धं।
खण्डं खण्ड त्यजति न पुनःस्वादुतामिक्षुदण्ड।
प्राणान्तेऽपि न विकृति र्जायते चोत्तमानाम ॥४९॥

कालुष्यकारणे जाते, दुर्निवारे गरीयसि ।
नान्तः क्षुभ्यति कस्मैचिच्छान्तात्माऽसौनिगद्यते ।।५०।।

नवे वयसि यः शान्तः, स शान्त इति मे मतिः ।
धातुषु क्षीयमाणेषु, शमः कस्य न जायते ।।५१।।

स एव प्रशमः श्लाघ्यः, स च श्रेयोनिबन्धनं ।
अदये हन्तुकामे यो न पुंसा कश्मलीकृतः ।।५२।।

पठतु शास्त्रसमूहमनेकधा, जिनसमर्चनमर्चनता सदा ।
गुरुनति कुरुता धरतां व्रतं, यदि शमो न वृथा सकल ततः ।।५३।।

सर्वेषामपि दोषाणां, मध्ये क्षोभ उदाहृतः ।
सर्वेषामपि धर्माणां, मध्ये शम उदाहृत ।।५४।।

अध ऊर्ध्वगतिं जीव-मनीत्वा न निवर्तते ।
लक्षण कोपसद्धर्मो द्वयमेतन् निरङ्कुशम् ।।५५।।

श्रुत्वा स्पृष्ट्वा च भुक्त्वा च, दृष्ट्वा ज्ञात्वा शुभाशुभ ।
न हृष्यति ग्लापयति यः, स शान्त इति कथ्यते ।।५६।।

शूद्रेण क्लेशितो धीरो, विक्रियां नोपगच्छति ।
राहुणा परिग्रस्तश्च चन्द्रमा, द्विगुणोज्ज्वलः ।।५७।।

धीमन् ! धर्म पर कार्यं, क्षमयोत्तमया त्वया ।
उपद्रवे कृते दुष्टै र्जातु कोपो न धर्महृत् ।।५८।।

स शूरःसात्विको विद्वान्, तपस्वी च जितेन्द्रियः ।
येनाशु क्षान्तिखड्गेन, क्रोधशत्रु र्निपातितः ।। ।।५९।।

सुतबन्धुपदातीना — मपराधशतान्यपि ।
महात्मनः क्षमन्ते हि तेषा तद्धि विभूषणम् ॥६०॥

यथा क्षमा खननज्वालनादिभि र्न कम्पते, तथा विश्वैरुपसर्गैः ध्यानस्थो योगी न चलति, क्वचिद् विधेर्वशाद् दुग्धामृतानि विषायन्ते साधूना चित्तानन्दमृतानि न, साधुजना उपसर्गै विकारं न प्राप्नुवन्ति । लोके विश्वजन्तुप्रज्वालनक्षमः कोपसदृशो वन्हि र्न त्रिजगत् प्रीणनक्षम क्षमातुल्यममृत न । द्वीपायनो मुनिः क्रोधेन सर्वा द्वारावती दग्ध्वा पश्चात् स्वशरीर च दग्ध्वा दुर्गतिमगात् ।

क्रोधानलसमुत्पन्नो, महादाहः शरीरिणाम् ।
निदहति तपावृत्त, धर्म द्वैपायनादिवत् ॥

## द्वीपायनस्य कथा

श्रीनेमिनाथो बलभद्रेण पृष्ट, स्वामिन् ! इय द्वारवती पुरी कि कालान्तरे समुद्रे निमक्ष्यति कारणान्तरेण वा विनक्ष्यति भगवानाह रोहिण्या भ्राता द्वीपायनकुमारस्तव मातुलाऽस्या पुर्या रुषा दाहको भविष्यति द्वादशे वर्षे मद्यहेतुत्वात् । तच्छ्रुत्वा द्वीपायनकुमार इदं जैनवचनमसत्य चिकिर्षुर्दीक्षा गृहीत्वा पूर्व देश गतः । द्वादशावधिपूरणार्थ तपः कर्तुमारब्धवान् । जरत्कुमारेण कृष्णमरणमाकर्ण्य बलभद्रादयो नेमिनाथ नमस्कृत्य सर्वेऽपि यादवा द्वारावतीं विविशुः । ततः कृष्णो बलभद्रश्च पूर्या घोषणां मद्यनिषेधिनीं कारयामासतुः, ततो मद्यपैर्मद्याङ्गानि पिष्टकिण्वा-

दीनि मद्यानि च कदम्बवने गिरिगह्वरे शिलाभाण्डानि आस्फालितानि। सा मदिरा कदम्बवनकुण्डेषु गता कर्मविपाकहेतुत्वेनावस्थिता। श्रीनेमिनाथ. पल्लवदेशे गतः। जिनेन सह भव्यलोक उत्तरापथमुच्चलितः। द्वीपायनस्तु द्वादशं वर्षं भ्रान्त्याऽतीत मन्वानो जिनादेशो व्यतिक्रान्त इति ध्यात्वा सम्यक्त्वहीनो द्वारवतीमागत्य गिरेर्निकटनगरबाह्यमार्गे आतापनयोगे स्थितः। वनक्रीडापरिश्रान्तास्तृष्णया व्याकुलीभूताः कादम्बकुण्डेषु जलमिति ज्ञात्वा शम्बादयस्ता सुरां पिबन्ति स्म, कदम्बवनस्थितां विसृष्टां कादम्बरी पीत्वा कुमारा विकाराश्च प्रापु। सा पुराणाऽपि वारुणी परिपाकवशात् तरुणीव तरुणान् वशेऽकरोत्। कुमाराअसम्बद्धं गायन्तो नृत्यन्तश्च स्खलितपादा. प्रमुक्तकुन्तलाः पुष्पकृतावतंसाः कण्ठालम्बितपुष्पमालाः सर्वे पुरं सभां गच्छन्तः ते सूर्यप्रतिमास्थितं द्वीपायनमुनिं दृष्ट्वा घूर्णमाननयना इत्यूचुः सोऽयं द्वीपायनो यतिर्यो द्वारवतीं धक्ष्यति सोऽस्माकमग्रतः क्व यास्यति वराक इति प्रोच्य सर्वतो लोष्टुभिः पाषाणैश्च तावत् प्रजघ्नुर्यावद् भूमौ पपात। एवं तैर्निस्तुःकैःताडित उत्पन्नाधिकक्रोधो दष्टोष्ठो यदूनां स्वतपसश्च विनाशाय भ्रकुटिं चकार। कुमारास्तु पुरीं प्रति गमनं चक्रुः, कैश्चित्तद्दुराचारो विष्णोर्बलस्य लघु निवेदितः। तच्छ्रुत्वा द्वारवत्या प्रलयं जिनोक्तं प्राप्तं तदापि मेन।ते परिच्छदरहितौ मुनिसमीपं गतौ। अग्निमिव ज्वलन्तं क्रोधेन सक्लिष्टधियं भ्रूभंगविषमवक्त्रं दुर्निरीक्ष्येक्षणं क्षीणकण्ठगतप्राणं विभीषणस्वरूपं ददृशतुः, कृताञ्जलिपुटौ

महादरात् प्रणिपत्य याचनां चक्रयां आनन्तावपि मोहाद् याचितवन्तौ । हे साधो ! चिरं परिरक्षितस्तपोभारः क्षमामूलः क्रोधाग्निना धक्ष्यते मोक्षसाधन परिरक्ष्यतां परिरक्ष्यतां मूढैः प्रमादबहुलैर्दुर्विचेष्टितं भवतः कृतं तत् क्षम्यतां क्षम्यतां । क्रोधश्चतुर्वर्गशत्रुः क्रोधः स्वपरनाशनः, अस्मभ्यं प्रसादः क्रियतां मुने ! इति प्रियवादिनौ तौ पादयोर्लगित्वा प्रार्थितवन्तौ तथापि सोऽनिवर्तकः संजातः ।तथा चोक्तं

क्षम्यतां क्षम्यता मूढै, प्रमादबहुलै कृत ।
दुर्विचेष्टिमस्मभ्यं, प्रसाद क्रियतां यते! ॥१॥
रक्ष्यतां रक्ष्यतां साधो ! चिर सुपरिरक्षित. ।
क्षमामूलस्तपो भारो धक्ष्यते क्रोधवन्हिना ॥२॥
इत्यादि प्रियवादिभ्या, प्रार्थमानोऽनिवर्तकः ।
सप्राणिद्वारिकादाहे, पापधीः कृतनिश्चयः ॥३॥

सर्वप्राणिसंयुक्तद्वारवती दाहे पापधीः कृतनिश्चयः युवामेव न धक्ष्यामीत्यङ्गुलिद्वयेनसंज्ञांचकार अनिवर्तकक्रोधं ज्ञात्वा विषण्णौ व्याघुट्य किं कर्तव्यतामूढौ पुरीं प्रविष्टौ। तदा शंभवाद्याश्चरमाङ्गका यादवाः पुर्या निष्क्रम्य दीक्षां गृहीत्वा गिरिगुहादिषु तस्थिवासः । द्वीपायनस्तु क्रोधशल्येन मृत्वा भवनामरो बभूव । सोऽग्निकुमारनामा विभङ्गेन पूर्ववैरं स्मृत्वा द्वारवतीं बालवृद्धस्त्रीपशुसमेतां विष्णुबलौ मुक्त्वा ददाह । तौ दक्षिणापथे वनीं प्रविष्टौ । तत्र विष्णुर्जरत्कुमारभिल्लेन पादे बाणेन ताडितो मृतः तृतीयं नरकं जगाम । द्वीपायनस्तु अनन्तससारी बभूव ।

**इति द्वीपायनस्यकथा सम्पूर्णा**

स्त्रोश्र्य।दिरहिता नारदादयो वहवोऽपि क्रोधेनाघार्जन कृत्वा रौद्रध्यानात्श्वभ्र' गताः । यस्य चित्तकुटीरके कोपाग्निः जृम्भते तस्य दृष्टयादिरत्नानि भस्मीभाव व्रजन्ति कोपाग्निः पूर्व देह दहति, ततोऽपरान् जनान् दहति धर्मादीश्च दहति । अमुत्राधोगति याति

यदि नग्न चोवरावृत इव क्वचित् कोप कुर्यात तदा तु स साधु पापधी असभ्यजनादपिनीच प्रोक्तः लोके क्रोधेन समोऽशुभ मर्वानर्थकरो वैरि न । अमुत्र क्रोध मनुष्याणा सत्तम श्वभ्रकारको भवति । इत्यादि दोषकर्तार क्रोधशत्रु भो तपोधना ! क्षमखड्गेन मोक्षाय जयन्तु । तथाचोक्त

पाव खवइ असेस खमाए परिमडिओ य मुणिपवरो ।
खेयर अमरणराण, पससणिओ धुव होइ ।।६१।।

इय णाऊण खमागुण खमेहि तिविहेण सयल जीवाण ।
चिरसचिय कोहसिहि, वरखमसलिलेण सिचेह ।।६२।।

क्रोधकषायस्य चिन्हमाह–कोध अङ्गे हृदि च कम्पन करोति । नेत्रे राग विदधाति. मनसि विभ्रम करोति, सवनातिनिष्णात बुद्धिक्षय करोति, पुण्यपदवी नाशयति तृष्णावृद्धि करोति । अधैर्यता तनोति, पित्तज्वरवद् उष्णता करोति । क्रोधदोषमाह क्रोध दर्श चित्त चरित्र च हन्ति, क्रोधः सर्वक्लेशकरः, कोधेकृते सति साहायिनोऽपि सकला जना विरुद्धा भवन्ति । क्रोधः स्वपरनाशकः

धर्मक्षयकर· संसारवर्धक: चतुर्वर्गशत्रु: चित्ते कालुष्यं जनयति क्रोधिपुरुषस्य तपः क्लेशाय पापाय च भवति । इत्यादि कोपदोषान् ज्ञात्वा आत्महितार्थिभि: पुंभिः कोप: परिवर्जनोय: केषा केनोपायेन कोपशमन भवति तद्विधिमाह – ब्राह्मणाना कोपो दानावसान· । क्षत्रियाणां प्राणावसान. । वणिग्जनाना प्रियवचनावसानः । सता हि कोपो नमनावसान. । गुरूणा प्रणामावसान । अतिक्रोधिन प्रभूत्वमग्नौ पतितं लवणमिव शतधा विशीर्यते । क्षमावन्त पुरुष सर्वे जनाः स्वमनसि संस्थाप्य अजस्र स्तुवन्ति प्रशसन्ति च ।

परिकुप्यति य सकारण, नितरा सोऽनुनयेन शाम्यति ।
अनिमित्तरुप प्रतिक्रिया, क्रियता केन नयेन कथ्यता ।।६३।।
अतिरोषवतो हित, प्रियवचन प्रत्युत कोपदीपकम् ।
शिखितप्ततमे हि सर्पिषि, प्रपतत्तोयमुपैति वन्हिताम्।।६४।।
कुपितस्य रिपो प्रशान्तये, प्रथम साम विधीयते बुधं. ।
कतकेन विना प्रसन्नता, सलिल कर्दमित प्रयाति किम् ।।।६५।।

## — क्रोधजयोपायमाचष्टे —

धर्मे स्थितस्य यदि कोऽपि करोति कष्टं,
पाप चिनोति गतबुद्धिरय वराकः ।
एवं विचिन्त्य परिकल्पकृतं त्वमुष्य,
ज्ञानान्वितेन भवति क्षमितव्यमत्र ।।६६।।

कोपेन कोऽपि यदि ताडयतेऽथ हन्ति,
पूर्वं मयाऽस्य कृतमेतदनर्थबुद्धया ।
दोषो ममैव पुनरस्य न कोऽपि दोषो,
ध्यात्वेति तत्र मनसा सहनीयमस्य ॥ ॥६७॥

व्याध्यादिदोषपरिपूर्णमनिष्ट सङ्गं,
पूतोदमङ्गमपनीय विवर्ध्य धर्मं ।
शुद्धं ददाति गतबाधमनल्पसौख्यं,
लाभो ममाऽयमिति घातकृतो विषह्यम् ॥६८॥

दोषेषु सत्सु यदि कोऽपि ददाति शाप,
सत्य ब्रवीत्ययमिति प्रविचिन्त्य सह्यम् ।
दोषेष्वसत्सु यदि कोऽपि ददाति शाप,
मिथ्या ब्रवीत्ययमिति प्रविचिन्त्य सह्यम् ॥६९॥

शप्तोऽस्म्यनेन न हतोऽस्मि नरगण रोषात्,
नो मारितोऽस्मि मरणेऽपि न धर्मनाश ।
कोपस्तु धर्ममपहन्ति चिनोति पापम्,
सचिन्त्य चारुमतिनेति तितिक्षणीयम् ॥७०॥

दोषो मेऽस्तीति युक्त, शपति शपति ना, त विनाऽज्ञ परोक्षे,
दिष्टया साक्षन्न साक्षा–दथ शपति न मा, ताडयेत्ताडयेद्वा ।
नासून् मुष्णाति तान् वा, हरति सुगतिद, नैष धर्मं ममेति,
स्वान्तं यः कोपहेतौ, सति विशदयति, स्याद्धि तस्येष्टसिद्धिः ॥७१॥

यद्यज्ञः कोऽपि सत्साधुं, कोपाच्छपति पापभाक्,
आकर्षत्यत्र वा हन्ति, यष्टयाद्यैः प्रायुधेन वा ॥७२॥

तत्सर्वं साधुना नून, सोढव्यं स्वहितेच्छुना,
कर्मक्षपाया कोपो न, कार्यः प्राणात्यये क्वचित्॥७३॥

यदि वाक्यकण्टकैं विद्धो, नावलम्बे क्षमाऽह,
ममप्याक्रोशकादस्मात्, को विशेषस्तदा भवेत् ॥७४॥

मदीयमपि चेच्चेतः, क्रोधाद्यैं विप्रलुप्यते ।
अज्ञातज्ञाततत्त्वाना, को विशेषस्तदा भवेत् ॥७५॥

हत्वा स्वपुण्यमन्तानं, मद्दोष यो निकृन्तति ।
तस्मैं यद्यह रुष्यामि, मदन्यः कोऽधमस्तदा ॥७६॥

यः शम प्राक् समभ्यस्तो, विवेकज्ञानपूर्वक ।
तस्यैतेऽद्य परिक्षार्थं, प्रत्यनीका समुपस्थिता ॥७७॥

परपरितोषनिमित्त, त्यजन्ति केचिद् धन शरीरं च ।
दुर्वचनबन्धनाद्यैं वंय रुषन्तो न लज्जामः ॥७८॥

मया दुरात्मना तेऽद्य, मनोवाक्कायकर्मभिः।
यदनिष्टं कृत सर्व, तत् त्वं क्षमस्व सर्वथा ॥७९॥

क्षमन्तव्य देव ! यतकिञ्चि-दस्माकमिति दुष्कृतं ।
विधातुं शक्यते केन, योग्यं सर्वं भवादृशाम् ॥८०॥

यदकार्षमहं दुष्ट — मतिकष्टकरं त्रिधा ।
तत्सर्वं सर्वदा सद्भिः, क्षम्यता मम दुष्टताम् ॥८१॥

क्रोधोत्पत्तिनिमित्ताना — मत्यन्तं सति सम्भवे ।
आक्रोशताडनादीना , कालुष्योपरम· क्षमा ॥८२॥
क्रोधवन्हे:क्षमैकेयं प्रशान्तौ जलवाहिनी ।
उद्दामसयमाराम — वृतिर्वाऽत्यन्तनिर्भर ॥८३॥
क्रोधयोध कथङ्कार — महङ्कारः करोत्ययं ।
लीलयैव पराजिग्ये , क्षमया रामयाऽपि य: ॥८४॥
हे स्वसोऽस्ति यथा क्षान्ति, वंर्तते त्वयि साप्रत ।
तथा लोकत्रये नास्ति, साधावपि न दृश्यते ॥८५॥
तदा सा श्रेष्ठिन प्राह, प्राग्भुक्त क्रोधज फल ।
अत एव मया क्रोधः, शान्तिं नीतोऽस्ति बान्धव ! ॥८६॥
उत्तमस्य क्षण कोपो, मध्यस्य प्रहरद्वय ।
अधमस्य त्वहारात्र, पापिष्ठस्य सदा भवेत् ॥८७॥
तीर्णो भवार्णवस्तै र्ये क्षाम्यन्ति क्षमयन्ति च ।
क्षाम्यन्ति न क्षमयता, ये, ते दीर्घजवञ्जवाः ॥८८॥
सत्संयममहाराम , यमप्रशमजीवित ।
देहिना निर्दहत्येव , क्रोधवन्हिः समुत्थितः ॥८९॥
अयं समुत्थित: क्रोधो, धर्मसार सुरक्षित ।
निर्दहत्येव निःशङ्क:, शुष्कारण्यमिवानल: ॥९०॥
कुर्वन्ति यतयोऽप्यत्र, क्रुद्धास्तत्कर्म निन्दितं ।
हत्वा लोकद्वय येन, विशन्ति धरणीतलम् ॥९१॥

"जयन्ति यमिनः क्रोध, लोकद्वय विरोधक"
जितक्रोधेन सर्व जगद् विजयते, जितक्रोधो दुखःस्यास्पदी न भवेत्

क्रोधस्य कालकूटस्य, विद्यते महदन्तर ।
स्वाश्रयं दहति क्रोधः, कालकूटो न चाश्रयम् ॥६३॥

अपकुर्वति कोपश्चेत्, कि कोपाय न कुप्यति ।
त्रिवर्गस्यापवर्गस्य, श्रीवितस्य च नाशिने ॥६४॥

अपकारिणिचेत् क्रोधः, क्रोधे क्रोधः कथन ते ।
धर्मार्थकाममोक्षाणा, चतुर्णां परिपन्थिनि ॥६५॥

कोधान् मित्र भवेच्छत्रुः, क्रोधाद् धर्मो विनश्यति ।
क्रोधाद् राज्यपरिभ्रशः, क्रोधान् मोमुच्यतेऽसुभिः ॥६६॥

क्रोधान्माताऽपि सक्रोधा, भवेत् क्रोधादधोगतिः ।
तत श्रेयार्थिना त्याज्यः, स सदेति जिनोदितम् ॥६७॥

तावत्तपो व्रत ध्यान, स्वस्थचित्ता दयादिक ।
यावत् क्रोधो न जायेत, तस्मात् क्रोध त्यजेन्मुनि ॥६८॥

पूर्व शोषयते गात्र, क्रोधाग्नि प्रकटीस्थितिः ।
पश्चादन्यामपिदधायद्, दुःखशोकादिदुर्गती ॥६६॥

लोकद्वयविनाशाय, पापाय नरकाय च ।
स्वपरस्यापकाराय, क्रोधशत्रु. शरीरिणाम् ॥१००॥

क्रोधोऽश्वत्थवदग्निकृत् पवनवत्, पित्तापहृत् पुण्यहृत,
नित्यधूमकृदग्निवद् दुरितकृत्, मिथ्याग्रहाकृष्टिकृत ।
मन्त्रोवाऽशुचि रब्धिबाडव इव शीघ्रगृगिरेर्वज्रवत्,
वृत्तध्यानदवाग्निवत् लसति, दुष्कर्माटवीमेघवत् ।१०१।

नाद्यान्त्यमनोः स्वपित्यवरजामर्षार्जितं दुर्यश,
प्रादोदोन्मरुभूतिमत्र कमठे, वान्त सकृत् क्रूध् विषम् ।
दग्ध्वा दुर्गतिमाप यादवपुरीं, द्वीपायनस्तु क्रुधा,
तत्क्रोध ह्यरिरित्यजत्वपि विराराधत्यरो पार्श्ववत ।।१०२।।

अभाष्या भाषते भाषा-मकृता कुरुते क्रिया ।
कोपव्याकुलिनो जीवो, ग्रहार्त इव कम्पते ।।१०३।।

त्रिवलीकलितालोको, रक्त स्तब्धो कुले क्षण ।
दन्त दष्टा धरो दुष्टो, जायते राक्षणोपमः ।।१०४।।

विदधान स्तना कोप, परघाताय मूढधीः ।
स्वय निहन्यते पूर्वमन्यघातो विकल्प्यते ।।१०५।।

ॐ ह्रीं उत्तमक्षमाधर्माङ्गाय नमः
कोपादिरहितां सारां, सर्वसौख्यकरा क्षमा ।
पूजया परया भक्त्या, पूजयामि तदाप्तये ।।
ॐ ह्रीं परमब्रह्मणे उत्तमक्षमाधर्माङ्गाय अर्घ्यं निर्वपामीति स्वाहा

# उत्तममार्दवधर्मः

## मङ्गलाचरणम्

श्रीमत् समस्तभुवनेश्वरवन्दिताय,
विध्वस्तमोहतिमिराय महोदयाय ।
ज्ञानेन बोधित जगत् त्रय नित्यताय,
तस्मै नमो भगवते जिनभास्कराय ।१।

भवति निखिललोक यः पितेवाहतात्मा,
दहति दुरितराशि पावेकेवेन्धनौघम् ।
वितरति शिवसौख्य हन्ति ससारशत्रु,
विदधति हितबुद्धया तं बुधा धर्ममत्र ।।२।।

मार्दव–मृदो र्भावो मार्दवः मृदिमा मृदुत्वम् मान परिहार. इत्यर्थः। उत्तमजातिकुलैश्वर्यरुपज्ञानतपोबलशिल्पित्वादियुक्तस्यापि मुनेस्तत्कृतमदावेशाऽभावात् परप्रयुक्तपरिभवनिमित्ताभिमानाऽभावो मार्दवं, उत्तमजाति, उत्तमकुल उत्तमरुपं, उत्तमविज्ञान, उत्तमप्रभुत्वं, उत्तमबल, उत्तमतप, उत्तमऐश्वर्यम् एतैः समुद्भवं मानं विखण्डयाति तं बुधा मार्दवधर्मं कथयन्ति,। मार्दवधर्मेण भूषितो मुनीन्द्रः प्रशस्तो भवति । मार्दवेन विना साधुरपि असाधुसमो भवति, अतः साधो र्मादवः परमो गुणः । मार्दवधर्मा जगत्त्रये सुखनिधानं । मार्दवधर्मेण भूषितः पुरुषो

जडोऽपि पण्डित उच्यते अष्टाविंशतिमूलगुणधारकाना साधूना मार्दवधर्मो भूषणम् गृहस्थोऽपि मार्दवधर्मेण सप्तधातुविवर्जितदेहो देवोभवति ततो जिनत्व लब्ध्वा मुक्तिरमापतिः स्यात् ।

धर्माङ्गमेतदिह मार्दवनामधेयं
जात्यादिगर्वपरिहारमुशन्ति सन्तः
तद्धार्यते किमुत बोधदृशा समस्त,
स्वप्नेन्द्रजालसदृश जगदीक्षमाणैः ॥

कास्था सद्मनि सुन्दरेऽपि परितो दन्दह्यमानाग्निभिः,
कायादौ तु जरादिभिः प्रतिदिनं गच्छत्यवस्थान्तर ।
इत्यालोचयतो हृदि प्रशमिनः शश्वद्विवेकोज्ज्वले,
गर्वस्यावसर. कुतोऽत्र घटते, भावेषु सर्वेष्वपि ॥

मार्दवधर्मेण समस्तानि व्रतानि सम्पूर्णता यान्ति ।

मार्दवधर्मेण मुक्तिस्त्री स्वयमेव दृढालिङ्गनं दत्ते ।

त्रियोगशुद्धया धृतमार्दवधर्मेण धर्मिणा प्रशस्तविश्व गुणैः सार्धं विश्वसुखदायी धर्मो भवति ।

काठिन्यपरिणामेन पाप जायते, समस्तव्रतानि क्षयं यान्ति पापहेतुःकठोरपरिणामो निन्द्योऽस्ति । मार्दवधर्मं कठोर परिणामयोः ईदृक् शुभाशुभं फलं विज्ञाय। त्यक्त्वा सुयत्नतो मार्दव धर्मः पालनीयः ।

तथाचोक्तम्

सत्त्वसत्त्वेषु सर्वेषु, तत्कारुण्यादिषु साधुषु ।
मृदुभिश्चित्तवाक्कायैः, निहत्य तत्कृतं मदम् ॥५॥
क्रियते मृदुभावो यो, ऽखिलाहंकारवर्जितः ।
तद्धर्मलक्षणं ज्ञेयं, मार्दवं सत्कृपाकरम् ॥६॥
इति सन्मृदुकाठिन्य–विलयोः फलमञ्जसा ।
शुभाशुभं विदित्वाऽहो, हत्वा काठिन्यमानसं ॥७॥
विश्वसत्त्वकृपाकान्तं, मार्दवं सुष्ठु यत्नतः ।
कुर्वन्तु मुनयो धर्मं, शिवश्रीसुखवृद्धये ॥८॥
गुणरिक्तेन किं येन, मानेनार्थः प्रसिद्ध्यति ।
तन्मन्ये मानिनां मानं, यल्लोकद्वयशुद्धिदं ॥९॥
अपमानकरं कर्म, येन दूरान्निषिध्यते ।
स उच्चैश्चेतसां मानः, परः स्वपरघातकः ॥१०॥
मार्दवेनापि सिद्ध्यन्ति, कार्याणि सुगुरूण्यपि ।
यतो जलेन भिद्यन्ते, पर्वता अपि निष्ठुराः ॥११॥
यो नरो मृदुवाक्यः स्यात्, सर्वेषामपि वल्लभः ।
स निहन्ति न सन्देहो, मधुरो भुजगानिव ॥१२॥
मृदुत्वं सर्वभूतेषु, कार्यं जीवेन सर्वदा ।
काठिन्यं त्यज्यते नित्यं, धर्मबुद्धिं विजानता ॥१३॥

अथ उत्तममार्दवधर्मलक्षणंमानंधिक्कुर्वन्नाह–

हृत्यतिष्टु विविधिशिल्पकौशलकुला, त्रुत्कर्षहर्षैमिभिः,
किर्मीरः क्रियतां चिराय सुकृती, म्लानिस्तु पुंमानिमात् ।
मानस्यात्मभुवापि कुत्रचिदपि, स्वोत्कर्षसंभावनम्,
तद्ध्येयेऽपि विधेश्वरेयमिति धिग, मानं पुमुत्प्लाविनम् ॥
प्रोत्तुङ्गमानशैलाग्र–वर्तिभि र्लुप्तबुद्धिभिः ।
क्रियते मार्गमुल्लङ्घ्य, पूज्यपूजाव्यतिक्रमः
करोत्युद्धतधी र्मानात्, विनयाचारलङ्घनम् ।
विराध्याराध्यसन्तानं, स्वेच्छयाचारेण वर्तते ॥२४॥
मानमालम्ब्य मूढात्मा, विधत्ते कर्म निन्दितं ।
कलङ्कयति चाशेष–चरणं, चन्द्रनिर्मलम् । २५॥
मानग्रन्थि र्मनस्युच्चै, र्यावदास्ते दृढस्तदा ।
तावद् विवेकमाणिक्यं, प्राप्तमप्यपसर्पति ॥२६॥
लुप्यते मानतः पुंसां, विवेकाऽमललोचनं ।
प्रच्यवन्ते ततः शीघ्रं, शीलशैलाग्रसंक्रमात् ॥२७॥
क्व मानो नाम संसारे, जन्तुव्रजविडम्बके ।
यत्र प्राणी नृपो भूत्वा, विष्ठामध्ये कृमि र्भवेत् ॥२८॥
क्रियेत गर्वः संसारे न भूयेत नृपोऽपि चेत् ।
दैवाज्जातः कृमिर्गुथे, मृत्यो नेक्ष्येत वा भवन् ॥२९॥

आत्मानुशासने चोक्तं

सत्यं वाचि मतौ श्रुतं हृदि दया, शौर्यं भुजे विक्रमे,
लक्ष्मी र्दानमनूनमर्थिनिचये, मार्गे गतिर्निर्वृ ते ।
येषां प्रागजनीह तेऽपि निरहं-कारा: श्रु ते गोचरा: ।
चित्रं संप्रति लेशतोऽपि न गुणा,स्तेषां तथाऽप्युद्धता: ॥

अथाष्टमदान् व्याचष्टे

ज्ञानवत् जातिकुलाभिरूप्य-विभूतिवीर्यास्तितपोर्चनाभि: ।
स्वोत्कर्षमन्यस्य सधर्मणो वा, कुर्वंन् प्रमर्षं प्रब्रुवंति दृष्टिम् ॥

मद:--कुलबलैश्वर्यरूपविद्यादिभिरहङ्कारकरणं ।
न खलु हित मदमूलमीरयंति ।

अथजातिकुलमदयो: परिहारार्थमाह-

पुंसोऽपि क्षतसत्त्वमाकुलयति, प्राय: कलङ्कः कलौ,
सद्दृग्वृत्तवदान्यता वसुकला, सौरूप्यशौर्यादिभि: ।
स्त्रीपुंसै: प्रथितै: स्फुरत्यभिजने, जातोऽसि चेद् दैवत:,
तज्जात्या च कुलेन चोपरि मृषा पश्यन्नध: स्वं क्षिपे: ॥

तत्र मातुरपेक्षया या जाति:, सा जातिश्चतुर्विधा भवन्ति, १ दिव्या-
जाति: २ विजयाजाति: ३ परमाजाति: ४ स्वाजाति: ।
पित्रपेक्षया कुलं, मम मातापितरौ यादृशौ जातिकुलशुद्धौ तादृशा
वन्यस्य नेति जातिकुलयो र्मदाविष्टेन पुंसा तिर्यग्योनिषु भ्रमता
सता भिन्नभिन्नजातीनां स्त्रीणां प्रकामम्भोऽधिकं पय: प्रपीतं ।

अनन्तानां तिर्यग्मनुजनारीणां तु वियोगजशोकतो यदश्रुजलं तत् समुद्राम्भसोऽधिकं पतितं, इति नीचोच्चमात्तासंज्ञाम् स्वमात्रमपि इव ज्ञात्वा चित्तबाक्कायैस्तत्कुतो मदो न कर्तव्यो । मम माता संघपत्युदुहिता । शीलेन सुलोचना, सीता, अनन्तमति, चन्दनादिवा सदृशी । वर्तते मम पितृपक्षोऽतीवोज्ज्वलः कोऽपि ब्रह्महत्या ऋषिहत्यादिभि दोषैः रहिता वर्तते ।

विख्याते विशाले उन्नते कुले समुत्पन्नोऽहं । मत्सदृशमन्यस्य कुलं नास्ति अथजातिमदस्य निरासः कथं क्रियते तदविवेचयति-भो आत्मन्! या उच्चजातिस्त्वया प्राप्ता सा जीवस्वभावो नास्ति, एषा जातिः कर्मोदयोत्पन्ना । अनेन जीवेन मनुष्यभवे अनेकशो जातयो लब्धा चाण्डाली शावरी मालिनी, दासी धीवरी इत्यादयः ।

भो आत्मन्! त्वया तिर्यग्गतौ शूकरी कूकरी गर्दभी शृगाली महिषीबडवा उष्ट्री हस्तिनी सिंहनी गौ अजा इत्यादि पर्यायेषु अनेकशः नीचजाति प्राप्ता । अनेकशो हीनजातिं प्राप्य सकृद् उच्चजातिं लभते जीवः । श्वाऽपि देवो देवोऽपि श्वा, नृपोऽपि कृमिःकृमिरपि नृपः, चाण्डालो देवोः देवोऽपि चाण्डालो भवति । अतो जातिमदं परित्यज्य मार्दव धर्मो धार्यः । पितृपक्ष कुलमुच्यते, उच्चकुलीनोऽपि मनुष्यः कार्मोदयेन हीनकुलीनो जायते, स्वर्गे महर्द्धिको देवो भूत्वा चाण्डालो भवति भो आत्मन्! त्वं आत्मस्वरूपमविज्ञाय मातृरजसः पितृवीर्याद् उत्पन्नकाये मिथ्याभिमानं विधाय सम्यक्त्वं मलिनं करोति, महता पुण्येन लब्धोत्तमकुलेन त्वया संयमशीलव्रततपोभिः सफलं करणीयं । हिंसाऽलीकपरधनहरण कुशीलसङ्करणा अमक्ष्यभक्षणनिशिभोजन

विदधाति, यतो मत्सकाशाद् बहवो धनविपुलास्तेभ्य राज्यादिसम्पद् बहुतरा, बलचक्रवर्त्यादिसम्पद् बहुतरा, ततोऽपि इन्द्राहमिन्द्रसम्पद् उत्तरोत्तरा बह्वी, ततोऽर्हत्सम्पद् बहुतराऽस्तीत्यादिकं चिन्तयित्वा निरहङ्कारत्वं विदधाति तदा ऐश्वर्यमदाभावो भवति ॥

लक्ष्मीमदं निषेधयति

या दैवैकनिबन्धना सहभुवां, याऽऽपद्भुयामाश्रितं,
या विश्रम्भमजस्रमश्नुते यथाऽऽसन्नं सुभक्तेष्वपि ।
या दोषेष्वपि तन्वती गुणधियं, युङ्क्तेऽनुरक्त्या जनान्,
स्वन्यस्वान्ततया श्रियाऽऽत्तु ह्रियसे, यास्यान्यमान्यात् न चेत्

राज्यदोषं प्राह–

बह्वपायमिदं राज्यं, त्याज्यमेव मनस्विनां ।
यत्र पुत्राः ससोदर्या, वैरायन्ते निरन्तरम् ॥४५॥

धनलोभाद् दोषवानपि धनी गुणवृद्धैरपि आश्रीयते

वयोवृद्धास्तपोवृद्धा, ये च वृद्धा बहुश्रुताः ।
सर्वे ते धनवृद्धस्य, द्वारि तिष्ठन्ति किङ्कराः ॥४६॥

महापुरुषाणां विभवो विकारहेतुर्न इत्याह

औद्धत्यं नवनिधिभिः प्रदीयमानैः,
न द्रव्यैरपरिमितैः स संप्रपेदे
तोयौघैरिव जलधिर्वेलोपनीतैः,
धीराणां न हि विभवो विकारहेतुः ॥४७॥

जिनचक्रिमहर्षित्वा-मप्रमाणं महाबलं ।
विदित्वा स्वबलस्यात्र न कार्यो बलिभिर्मदः ॥४१॥

द्वादशमनुष्याणां बलमेकस्मिन् बलिवर्दे भवति । द्वादशबलिवर्दानां बलमेकस्मिन्नश्वे भवति । द्वादशाश्वानां बलमेकस्मिन् महिषे स्यात् शतमहिषाणां बलमेकस्मिन् गजे भवति । शतगजानां बलमेकस्मिन् सिंहे भवति । शतसिंहानां बलमेकस्मिन् बलभद्रे भवति । शतबलभद्राणां बलमेकस्मिन् नारायणे भवति । शतनारायणानां बलमेकस्मिन् चक्रवर्ती भवति । शतचक्रवर्तिणां बलमेकस्मिन् तीर्थंकरे भवति ।

अत एव बलवतां पुरुषाणां स्वस्मादधिक बल परिज्ञाय बलमदो न विधेयः ।

प्रशंसनीयबलमाह–

येन बलेन कर्मरिपून् जयन्ते, तथा कामक्रोधलोभादिविकारान् विजयते तद्बल तु प्रशंसनीयम् । किन्तु निर्बलाऽनाथदीनजीव मारणं, परधनहरणं कुशीलसेवनं अन्यच्छेदनभेदनकरणं, दुराचार-प्रवर्तनं मृगयाविधानं इत्यादिकर्मणि बलोपयोगकरणं नरकतिर्यग्गतिकारणं भवति । तथा यादृग् बलं मयि विद्यते तादृग् अन्येषां नास्ति इत्थक्परिणामं बलमद उच्यते । अत एव बलमदपरिहारेण मार्दवधर्मो भवति ।

शाकिन्या १हरिमाययाऽपि २चारित्रात् पार्थः किलाऽप्यद्रियो,

समाधिगुप्तनामानं, चर्याकाले समागतं ।
भर्तास्वा संस्थाप्य तं शीघ्रं, दानार्थं त्रिजगद्धितं ॥५९॥
हे प्रिये ! भोजयेत्युच्चं, मुनीन्द्रं गुणशालिनं ।
प्रोक्त्वेति कार्यव्यग्रत्वात्, निर्गतो गेहतः स्वयं ॥६०॥
शय्यासने स्थिता मूढा, पश्यन्ती दर्पणे मुखं ।
स्वगर्वेण मुनेस्तस्य, दृशा दुर्वचनानि च ॥६१॥
विचिकित्सां पुनः कृत्वा, द्वारकपाटं विधाय च ।
तस्थौ दुष्टाशया कष्टं, हा पापं किमतः परं ॥६२॥
मुनीन्द्रोऽपि जगद्वन्द्यो, गतश्चारित्रमण्डितः ।
दुष्टं पापात्मनां याति, निधानं च गृहागतं ॥६३॥
तत्पापात् सप्तमे घस्रे, महोदुम्बरकुष्ठिनी ।
संजाता ब्राह्मणी मानात्, मुने निन्दा न शान्तये ॥६४॥
सर्वैस्त्यक्ता जनैः पापात्, तत्कुष्ठं सोढुमक्षमा ।
अग्निं प्रविश्य सा लक्ष्मी-मती मृत्वाऽऽर्तमानसा ॥६५॥
तत्रैव रजकस्याभूद्, गर्दभी पापकर्मणा ।
दुग्धपानं विना मृत्वा, जाता तत्रैव सूकरी ॥६६॥
कुक्करी क्रूरपापेन, पुनस्तत्रैव कुक्करी ।
साऽपि दावाग्निना दग्धा, कुक्करी प्राणहारिणा ॥

अहो हलाहलं घोरं, वरं [illegible] ।
भक्षितं न पुन र्निन्दा, मुनीनां शीलशालिनां ॥६८॥
पत्तने भृगुकच्छाख्ये, नर्मदाख्यनदीतटे ।
काणा नाम्नी सुदुर्गन्धा, साऽभूद् धीवरपुत्रिका ॥६९॥
मानतो ब्राह्मणी जाता, क्रमाद् धीवरदेहजा ।
जातिगर्वो न कर्तव्य,स्ततः कुत्रापि धीधनैः ॥७०॥
तत्र नावा जनान्, नित्यं, सा समुत्तारयत्यलं ।
एकदा तं समालोक्य, मुनीन्द्रं ज्ञानलोचनं ॥७१॥
नदीतीरे प्रणम्योच्चैः, संजगौ त्वं मया प्रभो ! ।
क्वापि दृष्टोऽसि तच्छ्रुत्वा, तेनोक्तं पूर्ववृत्तकं ॥७२॥
त्वं बालिके ! पुरा लक्ष्मी–ग्रामे लक्ष्मीमतिः कुधीः ।
सोमदेवद्विजस्योच्चैः, भामिनी मानपञ्चिता ॥७३॥
दृष्ट्वा मे निन्दनं मुग्धे ! महाकुष्ठेन पीडिता ।
अग्नौ मृत्वा पुनर्जाता, गर्दभी शूकरी क्रमात् ॥७४॥
तत्रैव कुक्करी भूत्वा, कुक्करी च ततो मृता ।
अत्र जाताऽसि दुर्गन्धा, धीवरीकुक्षिसम्भवा ॥७५॥
इत्यादिकं समाकर्ण्य, सैव धीवरबालिका ।
ततो जातिस्मरीभूत्वा, नत्वा तं मुनिनायकं ॥७६॥

भो मुने ! पापकर्माऽहं, संजातेति दुःखिता ।
रक्ष रक्षात्र योगीन्द्र! मां भ्रमन्तीं कुयोनिषु ॥७७॥
ततः समाधिगुप्तेन, मुनीन्द्रेण, प्रजल्पितं ।
धर्ममाकर्ण्य जैनेन्द्रं, सुरेन्द्राद्यैः समर्चितं ॥७८॥
संजाता क्षुल्लिका तत्र, तपः कृत्वा स्वशक्तितः ।
मृत्वा स्वर्गं समासाद्य, तस्मादागत्य भूतले ॥७९॥
कुण्डाख्य नगरे राजा, भीष्मो राज्ञी यशस्वती ।
तयोः पुत्री बभूवासौ, रुक्मिणी रूपमण्डिता ॥८०॥
वासुदेवेन सा कन्या, परिणीता गुणोज्ज्वला ।
पुण्येन सर्वजन्तूनां, भवेयुः सम्पदोऽखिलाः ॥८१॥
इति पुण्यापुण्यमानापमानफलं ज्ञात्वा ।
मानं त्यक्त्वा मार्दवधर्मो रक्षणीयः मुमुक्षुभि

ॐ ह्रीं उत्तममार्दवधर्माङ्गाय नमः

त्यक्तमानं सुखागारं, मार्दवं कृपयान्वितं ।
पूजया परया भक्त्या, पूजयामि तवाप्तये ॥८२॥

ॐ ह्रीं परमब्रह्मणे उत्तममार्दवधर्माङ्गाय नमः
अर्घ्यं निर्वपामीति स्वाहा

९- यः कृतदोषस्य गर्हानिन्दादिकं तथा प्रायश्चित्तं च विदधाति तस्यार्जवधर्मो भवति । आर्जवधर्मस्य एतल्लक्षण धर्मालयं तीर्थंकृता धर्मनाथेन प्रणीतं आसन्नभव्यैः ऋजुबुद्धया आचर्यते । अनेन आर्जवधर्मेण अनेकनिर्मलगुणा जायन्ते, त्रिजगत्सुखसाराणि तथा तीर्थेशदेवेन्द्रनागेन्द्रमनुजेन्द्रादिविभूतयश्च लभन्ते । ऋजुचित्तानां पुंसां भवान्तकः मुक्तिप्रदः सर्वार्थसाधक. संसारजनितजन्म जरामरणामयनिवारको धर्मो भवेत् ।

धर्माङ्गमार्जवं धार्य—मवक्रै र्योगकर्मभिः ।
न वक्रता विधेयाऽत्र, क्वचिद् धर्मविनाशिनी ॥४॥
यो वाचा स्वमपि स्वान्तं, वाचं वञ्चयतेऽनिशं ।
चेष्टया च स विश्वास्यो, मायावी कस्य धीमतः ॥५॥
दोषो निगुह्यमानोऽपि, स्पष्टतां याति कालतः ।
निक्षिप्तं हि जले वर्चो, न चिरं व्यवतिष्ठते ॥६॥
चित्तमन्वेति वाचा, येषां वाचामन्वेति च क्रिया ।
स्वपरानुग्रहपराः, सन्तस्ते विरला कलौ ॥७॥

एकदा रामोलक्ष्मण प्रति प्राह-

लक्ष्मण ! पश्य पम्पायां बकोऽयं परमधार्मिकः ।
शनैः शनैः पदं धत्ते, जीवानां वधशङ्कया ॥८॥

रामस्य स्तुतिसूचकवचनं श्रुत्वा मत्स्या रामं प्रति प्राह-

वकः किं स्तूयते राम! येनाहं निष्कुलीकृतः ।
सहवासी हि जानाति, सहवासि विचेष्टितम् ॥९॥

कश्चित्कामी युवतिं प्रति प्राह–

किं मां निरीक्षसि घटेन कटिस्थितेन,
वस्त्रेण चारुपरिमिलितलोचनेन ।
अन्यं प्रपश्य पुरुषं तव कर्मयोग्यं,
नाहं घटाङ्कितततनुं प्रमदां स्पृशामि ॥१०॥

तं कामिनं प्रति युवतिर्ब्रूते

सत्यं ब्रवीषि मकरध्वजबाणपीड !,
नाहं तदर्थं मनसा परिचिन्तयामि ।
दासोऽद्य मे विघटितस्तव तुल्यरूपी,
सो वा भवेन्न च भवेदिति मे वितर्कः ॥१२॥

त्रिविधाशुभयोगमाह–

हिंसाऽब्रह्मचुराप्रायं, काये कर्माशुभं मतं ।
असभ्याऽसत्यपारुष्य–प्रायं वचनगोचरम् ॥१३॥
असूयेर्ष्यामदप्रायं, मनोव्यापारसंश्रयम् ।
एतद्विपर्ययाज् ज्ञेयं, शुभमेतेषु तत्पुनः ॥१४॥
निहत्य निखिलं पापं, मनोवाग्देहवञ्चनैः ।
करोतु निखिलं कर्म, दानपूजादिकं ततः ॥१५॥

मायाविना दयाधर्मव्रतसंयमयमनियमजापाद्याःसर्वशुभक्रियाः

स्वप्नराज्यवत् निष्फला भवन्ति । मायाविपुरुषस्य केऽपि न विश्व सन्ति । मायायाः इत्यादिकबहून् दोषान् विज्ञाय मायां दूरत. परित्यज्य ऋजुयोगेन मुक्तये आर्जवधर्मम् कुर्वीध्वं ।
आर्जवधर्मेण अशुभास्रवो निरुध्यते । अशुभास्रवाभावेन नरकगतेः छेदनभेदनताडनमारणतापनशूलारोहणवैतरणीमज्जनयन्त्रनिपीडन कुम्भीपाकोत्कालनमित्यादिदुःख परम्परायाः अभावः । अनेनार्जव-धर्मेण अव्रता अपि भोगभुव आर्या देवालय यान्ति. मायाविनो जीवा कौटिल्यपरिणामेण बहुपापार्जनं कृत्वा मार्जारश्वसिंहव्याघ्र नकुलसर्पवृकवकवृश्चिकादितिर्यग्गतिं लभन्ते ।

तथा चोक्तम्

**स्त्रैणषण्ढत्व तैरश्च, नीचयोनिपराभवाः ।**
**मायादोषेण लभ्यन्ते, पुंसां जन्मनि जन्मनि ॥१६॥**

दुर्विषया मायाविना तपोध्यानादिकं कूटद्रव्यमिव व्यर्थम् भवति

**कूटद्रव्यमिवासारं, तपोधर्मव्रतादिकं ।**
**मायाविनामनुष्ठानं, सर्वं भवति निष्फलम् ॥१७॥**

तथा तिर्यग्गते क्षुत् तृषबन्धननासिकाछेदनशीतोष्णवर्षादंशमशक भारोद्वहनादिदुःखसन्ततेरभावो जायते । तथा मनुष्यगतेः त्रिदोष जनितातीसारभगन्दरराजयक्ष्मकासश्वासार्शकर्णाक्षिमस्तकोदर कुष्ठादिशारीरिकरोगप्राचुर्यनिर्धनपरायत्तकुरूपविकलाङ्ग यौषित पमृत्युप्रियवियोगाप्रियसमागमादिदुःखाभावो भवति ।
तथा देवगतेः भवनवासिव्यन्तरज्योतिष्काभियोगकिल्विषकाद्युत्पत्ति

स्वर्गच्यवनहीनाधिकसम्यग्दर्शनान्वितः सम्यक्‌प्रयोगो भवति,
आर्जवधर्मेण जायमानशुभास्रवप्रसादेन इन्द्राहमिन्द्रचक्रिबलदेव
केशवकामदेवतीर्थंकरादिपदानि प्राप्यन्ते । अत एव भो
भव्यजनाः ! ऋजुकुटिलयो गुणदोषान् विज्ञाय कुटिलभावं विहाय
आर्जवधर्मम् यथाशक्ति पालयन्तु ।

सा माया पञ्चविधा

*निकृतिः*—अतिसन्धानकुशलता, धने कार्ये वा कृताभिलाषस्य वञ्चना निकृति रुच्यते ॥१॥

*उपधिः*—सद्भाव प्रच्छाद्य धर्मव्याजेन स्तैन्यादिदोषे प्रवृत्ति रुपधिसंज्ञिता माया निरूप्यते ॥२॥

*सातिप्रयोगः*—तदर्थेषु विसंवादः स्वहस्तनिक्षिप्तद्रव्यापहरणं, दूषणं, प्रशंसा वा सातिप्रयोगमाया प्रतिपाद्यते ॥३॥

*प्रणिधिः*—प्रतिरूपद्रव्यमानकरणानि, ऊनातिरिक्तमानं, संयोजनया द्रव्यविनाशनमिति प्रणिधिमाया कथ्यते ॥४॥

*प्रतिकुञ्चन मायाः*—आलोचनं कुर्वतां दोषनिगूहनं प्रतिकुञ्चनमाया कथ्यते ।

**हृदि यत् तद्वाचि बहिः, फलति तदेवार्जवं भवत्येतत् ।**
**धर्मो निकृतिरधर्मो, द्वाविह सुरसद्मनरकपथौ ॥१८॥**

**कुटुम्बपरिवारादि-सम्बद्धजनादिषु ।**
**विनश्वरेषु भोगेषु, मायां कः कुरुते सुधीः ॥१९॥**

मायित्वं कुरुते कृतं सकृदपि, छायाविघातं गुणे-
ष्वाजाते यमिनोऽर्जितेष्विह गुरु-क्लेशैः समादिष्वलं ।
सर्वे तत्र यदासतेऽतिनिभृताः क्रोधादयस्तत्त्वलः,
तत्पापं वत येन दुर्गतिपथे जीवश्चिरं भ्राम्यति ॥२०॥

मृदुमतिमुनिराजकथा

अथ दुर्गगिरे मूर्ध्नि नाम्ना गुणनिधि मुनिः ।
चकार चतुरो मासान्, वार्षुकानन्मुक्तिदान् ॥२१॥
सुरासुरस्तुतो धीरः, समाप्तनियमोऽभवत्।
उत्पपात मुनिः क्वापि, ऋद्धिना गगनायनः ॥२२॥
अथो मृदुमति भिक्षाकरणार्थं सुचेष्टितः ।
आलोकनगरं प्राप्तो, युगमात्राहितेक्षणः ॥२३॥
ददर्श सम्भ्रमेणैतं,पौरलोकः सपार्थिवः ।
शैलाग्रेऽवस्थितः सोऽय-मिति ज्ञात्वा सुभक्तितः ॥२४॥
भव्यै बहुप्रकारै,स्तं तर्पयन्ति स्म पूजितं ।
जिह्वेन्द्रियरतो मायां, स च भेजे कुकर्मतः ॥२५॥
स त्वं यः पर्वतस्याग्रे, यतिनाथो व्यवस्थितः ।
वन्दितस्त्रिदशैरेव-मुक्तः सोऽजनमच्छिरः ॥२६॥
अज्ञानादभिमानेन, दुःखबीजमुपार्जितं ।

स्वावगौरवसक्तेन, तेनेदं स्वस्य वञ्चनम् ॥२७॥
एतत्तेन गुरोरग्रे, न मायाशल्यमुद्धृतं ।
दुःखभाजनतां येन, सम्प्राप्तः परमामिमाम् ॥२८॥
ततो मृदुमतिः कालं, कृत्वा तं कल्पमाश्रितः ।
अभिरामोऽमरो यत्र, वर्तते महिम्नान्वितः ॥२९॥
च्युतो मृदुमतिस्तस्मात्, पुण्यराशिपरिक्षये ।
मायाऽवशेषकर्माक्तो, जम्बूद्वीपं समागतः ॥३०॥
उत्तुङ्गशिखरो नाम्ना, निकुञ्ज इति भूधरः ।
अटव्यां तस्य शल्लक्यां, गहनायां विशेषतः ॥३१॥
अयं जीमूतसंघात-संकाशो, वारणोऽभवत् ।
क्षुब्धार्णवसमस्वानो, गतिर्निर्जितमारुतः ॥३२॥
अत्यन्तभैरवाकारः, कोपकालोऽभिमानवान् ।
शशाङ्काकृतिः संहृष्टो, वन्तिराजो गुणान्वितः ॥३३॥

इतिमायाफलवर्णिका कथा

पिता प्रियश्चैव सहाविबन्धुः,
माताऽपि मान्या भगिनी सुशीला ।
भार्या मनोज्ञा स्वजनोऽपि बन्धुः,
दासी च दासः सचिवोऽसि भव्यः ॥३४॥

गजाश्वहर्म्याणि सुराज्यभारः,
न याति सार्धं किमपि त्वया हि ।
ज्ञात्वेति तेषां प्रविहाय मायां,
कुरुष्व शुद्धिं हि भवेत् स्वसिद्धिः ॥३५॥

मायां करोति यो मूढ—इन्द्रियार्थकसेवने ।
गुप्तं पापं स्वकं तस्य, व्यक्तं भवति कुष्ठवत् ॥३६॥

अर्गलेवापवर्गस्य, पदवी श्वभ्रवेश्मनः ।
शीलशालवने वन्हिः, मायेयमवगम्यताम् ॥३७॥

यः पुमान् वञ्चनासक्तः, तस्य न स्यात् परिग्रहः ।
न चिरं जीवितं तस्मात्, सद्भिस्त्याज्यं हि वञ्चनम् ॥

जन्मभूमिरविद्यानां, अकीर्तेर्वासमन्दिरम् ।
पापपङ्कमहागर्तो, निकृतिः कीर्तिता बुधैः ॥३९॥

प्रपञ्चबहुलाद् वृत्तात्, कूटमानादितोऽपि च ।
वञ्चना प्राणिनामुक्ता, माया मायाविवर्जितैः ॥४०॥

लोकद्वयहितं केचित्, तपोभिः कर्तुमुद्यताः ।
निकृत्या वर्तमानास्ते, हन्त हीना न लज्जिताः ॥

मायायुक्तं वचस्त्याज्यं, माया संसारवर्धिनी ।
यदि सङ्गपरित्यागः, कृतः किं मायया तव ॥४१॥

विद्यादम्भः क्षणस्थायी, दानदम्भो दिनत्रयम् ।
मन्त्रदम्भस्तु षण्मासान्, मौनदम्भो हि दुस्तरः ॥४२॥

कुशलजननवन्ध्यां–सत्यसूर्यास्तसन्ध्यां,
कुगतियुवतिमालां–मोहमातङ्गशालां ।
शमकमलहिमानीं–दुर्यशोराजधानीं,
व्यसनशतसहायां–दूरतो मुञ्च मायाम् ॥४३॥

मायामविश्वासविलासमन्दिरं,
दुराशयो यः कुरुते धनाशया ।
सोऽनर्थसार्थं न पतन्तमीक्षते,
यथा विलाडो लगुडं पयः पिबन् ॥४४॥

मायाविनः प्रपञ्चाढ्या वञ्चयन्ति जगत्त्रयम् ।
तस्यात्मवञ्चनमात्रं, चौर्यं किं नियतम्परं ॥४५॥
हिंसाऽसत्यमशौचं च, तस्य चौर्यं निरन्तरं ।
पापीयान् सोऽस्ति सा यस्य, प्रपञ्चबहुला स्थितिः ॥
दौर्भाग्यजननी माया, माया दुर्गतिवर्धिनी ।
नृणां स्त्रीत्वप्रदा माया, ज्ञानिभिः त्यज्यते ततः ॥४७॥
सेयं मायामहागर्तान्, मिथ्याघनतमोमयात् ।
यस्मिन् लीना न लक्ष्यन्ते, क्रोधादिविषमाहयः ॥४८॥

इहाकीर्ति समाधत्ते, मृतो यात्येव दुर्गति ।
मायाप्रपञ्चदोषेण, जनोऽयं जिह्मिताशयः ॥३०॥
परं च वञ्चयामीति, यो हि मायां प्रयुज्यते ।
इहामुत्र च लोके वै, तेनात्मा वञ्चितः सदा ॥३१॥

विधाय मायां विविधैरुपायैः,
परस्य ये वञ्चनमाचरन्ति ।
ते वञ्चयन्ति त्रिदिवापवर्ग,
सुखाद् महामोहसखाः स्वमेव ॥५०॥

मायावल्लीमशेषां, मोहमहातरुसमारूढां ।
विषयविषपुष्पसहितां, लुनन्ति मुनयो ज्ञानशस्त्रेण ॥

मायया तु जीवा दुर्गतिमेव लभन्ते तत् कथानकम् ब्रूते

प्रणम्य त्रिजगन्नाथं, श्रीजिनं शर्मकोटिदं ।
मायाबोधकथां माया–विनाशाय वदाम्यहम् ॥५१॥
अत्रासूवजितावर्त, पत्तने सुचिरन्तने ।
पुष्पचूलो महाराजः, पुष्पदत्ता प्रियाऽभवत् ॥५२॥
एकदाऽसौ महीनाथो, राज्यं कुर्वन् निजेच्छया ।
अमरादिगुरोः पार्श्वे, मुनीन्द्रस्य महाधियः ॥५३॥
धर्ममाकर्ण्य जैनेन्द्रं, स्वर्गमोक्षसुखप्रदं ।
त्रिधा वैराग्यमासाद्य, मुनिर्जातो विचक्षणः ॥५४॥

पुष्पदत्ता च सा राज्ञी, ब्रह्मिलाख्याऽऽर्यिकान्तिके ।
आर्यिका रूपमादाय, कुलैश्वर्यादिगर्विता ॥५५॥
अन्यासामार्यिकाणां च, धर्मतत्त्वपराङ्मुखा ।
दर्शनां न करोति स्म, धिग्मू तां कुचेष्टितं ॥५६॥
तथाऽसौ पुष्पदत्ताख्या, मूढात्मा स्वशरीरके ।
सुगन्धद्रव्यकेनोच्चैः, संस्कारं कुरुते सदा ॥५७॥
तदा तां ब्रह्मिला प्राह, जैनमार्गविचक्षणा ।
आर्यिके ! पुष्पदत्ते ! भो, तवेदं नैव युज्यते ॥५८॥
तच्छ्रुत्वा सा दुष्टात्मा, मायावाक्यं जगाद च
भो क्षान्तिके ! स्वभावेन, सुगन्धं मे शरीरकं ॥५९॥
यस्य चित्ते स्वयं नास्ति, धर्मः श्रीमज्जिनेशिनां ।
बोधितस्यापि दुष्टस्यात्,तस्य दुःकर्म पापिनः ॥६०॥
एवं मायामहाशल्य-मण्डिता पुष्पदत्तिका ।
मृत्वा पापेन चम्पायां, तत्राजश्रेष्ठिनो गृहे ॥६१॥
जाता सागरदत्तस्य, दासी पूती मुखी कुधीः ॥६२॥
इति ज्ञात्वा बुधै नित्यं, त्याज्यं मायाकुकर्म तत् ॥
मायाऽसौ पशुयोनिदुःखजननी, माया कुलध्वंसिनी,
माया रूपयशोमहत्वसुगति,श्रीशर्मनिर्नाशिनी ।

ज्ञात्वेत्थं जिनधर्मकर्मनिरतैः, सद्गण्डितं दूरतः,
त्यक्त्वा तां भवसागरस्य लतिका, धर्मेऽत्र कार्या मतिः ।।
'इत्याद्या बहवो जीवा मायया दुर्गतिं प्राप्ताः,,
वितरति विपुला निकृतिधारित्री,
बहुविधमसुखं दुरितसवित्री ।
इयमिति निहता विपुलमनस्कैः,
ऋजुगुणपविना विमलयशस्कैः, ।।६४।।
आर्जवः क्रियते सम्यग्, दुष्टबुद्धिश्च त्यज्यते ।
पापचिन्ता न कर्तव्या, श्रावकै धर्मचिन्तकैः ।।६५।।
ऊर्ध्वंग ऋजुभावेन, कौटिल्येन चतुर्गतिः ।
यत्ते रोचेत तत्कुर्याः, किमन्यै बहुजल्पनैः ।।६६।।
ॐ ह्रीं उत्तमार्जवधर्माङ्गाय नमः
आर्जवं स्वर्गसोपानं, कौटिल्यादिविवर्जितं ।
पूजया परया भक्त्या, पूजयामि तदाप्तये ।।
ॐ ह्रीं परब्रह्मणो उत्तमार्जवधर्माङ्गाय
अर्घ्यं निर्वपामीति स्वाहा

# उत्तमशौचधर्मः

## *मङ्गलाचरणम्*

विजितजन्मजरामृतिसञ्चयः,
प्रहतदारुणरागकदम्बकः ।
अघमहातिमिरव्रजभानुमान्,
जयति यः परमात्मपदस्थितः ॥१॥

दत्वा द्यावापृथिव्योर्वरविषयहृतिं वीतभीशुक्लिवार्ता,
कृत्वा लोकत्रयैश्यं सुरनरपतिभिः प्राप्य पूजां विशिष्टां ।
मृत्युव्याधिप्रसूति-प्रियविगमजरा-रोगशोकप्रहीणो,
मोक्षे नित्योरुसौख्ये क्षिपति निरुपमे, यः स वोऽव्यात् सुधर्मः ॥

### उत्तमशौचधर्मः

*अथशौचधर्मलक्षणं प्रतिपादयति*—शुचेर्भावः शौचं प्रकर्षप्राप्ता लोभनिवृत्तिः शौचमुच्यते । प्रकृष्टा लोभनिवृत्तिः शौचम्, देहे निर्ममता, ममेदं बुद्धिरहिता शौचं कथ्यते, शरीरलोभनिवृत्तिः शौचं शरीरलोभनिवृत्तिः, सकललोभनिवृत्तिमूलं, शरीरोपकृतये बन्धुधनादिषु लोभो जायते, परवस्तुषु चित्तशुद्धिं विना शौचधर्मो न भवेदित्याह

यथा च जायते चेतः सम्यक्शुद्धि सुनिर्मला ।
तथा ज्ञानविदा कार्यं, प्रयत्नेनापि भूरिणा ॥३॥
आरम्भे वर्तमानस्य, हिंसकस्य युधिष्ठिर! ।
गृहस्थस्य कुतः शौचं, मैथुनाभिरतस्य च ॥४॥
प्राणोशमनुमायाम्बां, मरिष्यन्तीं विलम्बयन् ।
लोभः निशुम्भ्यते येन, तद् भजेच्छौचदैवतम् ॥५॥

शौचधर्मप्रशंसामाह–

सत्यं शौचं तपः शौचं, शौचमिन्द्रियनिग्रहः ।
सर्वभूतदया शौचं, पञ्चमं स्नानशौचकम् ॥६॥

"न सत्यसदृशं शौचम्"

कामरागमदोन्मत्ता, ये चाक्षवशवर्तिनः ।
न ते जलेन शुद्ध्यन्ति, स्नानतीर्थशतैरपि ॥७॥
न मृतिका जलं नैव, नाप्यग्निः कर्मशोधनम् ।
शोधयन्तु बुधाः कर्म, ज्ञानध्यानतपोजलैः ॥८॥
मृदो भारसहस्रेण, जलकुम्भशतेन च ।
न शुध्यति दुराचारः, स्नानतीर्थशतैरपि ॥९॥
चित्तमन्तर्गतं दुष्टं, तीर्थस्नाने न शुद्ध्यति ।
शतशोऽपि जले धौतं, सुराभाण्डमिवाशुचि ॥१०॥

अन्तश्चित्तं न शुद्धं चेद्, बहिःशौचे न शौचभाक् ।
सुपक्वमपि निम्बस्य, फले बीजं कटु स्फुटम् ॥११॥
गङ्गासागरपुष्करादिषु सदा, तीर्थेषु सर्वेष्वपि;
स्नातस्यापि न जायते तनुभृतः, प्रायो विशुद्धिःपरा ।
मिथ्यात्वादिमलीमसं यदि मनो, बाह्येऽतिशुद्धोदकैः,
धौतः किं बहुशोऽपि शुद्धयतिसुरा–सम्पूर्णो घटः ॥

आत्मानदी संयमतोयपूर्णा,
सत्यवहा शीलतटा दयोर्मिः ।
तत्राभिषेकं कुरु पाण्डुपुत्र!,
न वारिणा शुद्ध्यति चान्तरात्मा ॥१३॥

आत्मबोधशुचितीर्थमद्भुतम्,
स्नानमत्र कुरुतोत्तमं बुधाः ।
यन्न यात्यपरतीर्थकोटिभिः,
क्षालयत्यपि मलं तदन्तरम् ॥१४॥

इन्द्रियार्थादिवस्त्वोघं, लौलुप्यं लोभकारणं ।
हत्वा निर्लोभधर्माङ्गं, शौचं कार्यं न-जीस्कृत् ॥१५॥
"शौचं लोभादिनिर्मुक्तं, मुक्तिश्रीचित्तरञ्जकं ।
यत्परदारार्थादिषु, जन्तुषु निःस्पृहमहिंसकं चेतः ।

दुश्छेद्यान्तर्मलहृत्, तदेव शौचं परं नान्यत् ॥१६॥

समता सर्वभूतेषु, मनोवाक्कायनिग्रहः ।
पापध्यानकषायाणां, निग्रहेण शुचिर्भवेत् ॥१७॥

शुचि भूमिगतं तोयं, शुचि नारी पतिव्रता ।
शुचि धर्मपरो राजा, ब्रह्मचारी सदा शुचि ॥१८॥

सन्तोषगुणप्रशसामाह—

सन्तोषामृततृप्तानां, यत् सुखं शान्तचेतसां ।
कुतस्तद् धनलुब्धाना—मितश्चेतश्च धावताम् ॥१९॥

"सन्तोषी सदा सुखी, न सन्तोषात् परं सुखम्"

परिग्रहाभिलाषाग्निं, ज्वलन्तं चित्तकानने ।
विध्यापयेदसौ क्षिप्रं, सन्तोषघनधारया ॥२०॥

उच्चैरेष तरुः फलं च विपुलं, दृष्ट्वैव हृष्टः शुकः,
पक्वं शालिवनं विहाय जडधीः, तं नारिकेरं गतः ।
तत्रारुह्य बुभुक्षितेन मनसाऽरम्भः कृतो भेदने ।
आशा तत्र निरर्थका हि गदिता, चञ्चु र्गता चूर्णताम् ॥

गन्धाढ्यां नवमालतीं मधुकरःत्यक्त्वा गतः यूथिकां,
तां त्यक्त्वाऽथ गतश्च पाटलतरुः, पश्चात् सरोजं गतः ।
बद्धस्तत्र निशाकरेण सहसा, रौतित्यसौ मूढधीः,

सन्तोषेण विना पराभवपदं, प्राप्नोति सर्वे जनाः ॥२२॥

जातः कल्पतरुः पुरः सुरगवी, तेषां प्रविष्टा गृहम्,
चिन्तारत्नमुपस्थितं करतले, प्राप्तो निधिः सन्निधिः ।
विश्वं वश्यमवश्यमेव सुलभाः, स्वर्गापवर्गश्रियो,
ये सन्तोषमशेषदोषदहनं, ध्वंसाम्बुदं बिभ्रते ॥२३॥

सन्तोषं कुरु सर्वसौख्यजनकं, दुःखार्णवोत्तारकं ।
सद्धर्मामलरत्नसागरपरं पापात्मकं निःस्पृहं
स्वर्गमोक्षैकवशीकरं गुणनिधिं, तीर्थेश्वरैः सेवितं ।
चिन्तादुःखभयादिदूरमसमं, लोभं त्यज त्वं सदा ॥२४॥

सर्पाः पिबन्ति पवनं, न च दुर्बलास्ते,
शुष्कैस्तृणैर्वनगजा, बलिनो भवन्ति ।
कन्दैः फलैर्मुनिवराः क्षपयन्ति कालं,
सन्तोष एव पुरुषस्य परं निधानम् ॥२५॥

समसंतोसजलेण, जो धोवदि तिव्वलोहमलपुंजं ।
भोयणगिद्धिविहीणो, तस्स सउच्चं हवे विमलं ॥२६॥

ईश्वरो नाम सन्तोषी, यो न प्रार्थयते परं ।
प्रार्थना महतामत्र,परं दारिद्र्यकारणम् ॥२७॥

सन्तुष्टाः सुखिनो नित्य—मसन्तुष्टाः सुदुःखिताः ।

उभयोरन्तरं ज्ञात्वा, सन्तोषे क्रियतां रतिः ॥२८॥
सुखं त्रैलोक्यलाभेऽपि, नासन्तुष्टस्य जायते ।
सन्तुष्टो लभते सौख्यं, दरिद्रोऽपि निरन्तरम् ॥२९॥
येन सन्तोषामृतं पीतं, निर्ममत्वेन वासितं ।
त्यक्तं तैर्मानसं दुःखं, दुर्जनेनैव सौहृदम् ॥३०॥
यैः सन्तोषामृतं पीतं, तृष्णातृट्प्रणाशकं ।
तैश्च निर्वाणसौख्यस्य, कारणं समुपार्जितम् ॥३१॥
हृदयं दह्यतेऽत्यर्थं, तृष्णाग्निपरितापितं ।
न शक्यं शमनं कर्तुम्, विना सन्तोषवारिणा ॥३२॥
द्रव्याशां दूरतस्त्यक्त्वा, सन्तोषं कुरु सन्मते! ।
मा पुनर्दीर्घसंसारे, पर्यटिष्यसि निश्चितम् ॥३३॥

लोकद्वये दुःखफलानि दत्ते
गार्धक्यतोयेन विवर्द्धितोऽयम्
संन्तोषशस्त्रेण निकर्तनीयः,
स लोभवृक्षो बहुलः क्षणेन ॥३४॥

संन्तोषसारसद्रत्नं, समादाय विचक्षणा ।
भवन्ति सुखिनो नित्यं, मोक्षसन्मार्गवर्तिनः ॥३५॥

लोभनिन्दामाह–

अनादिनिधने लोके, येऽत्र लोभेन मोहिताः ।
जन्तवो दुःखमत्युग्रं, प्राप्नुवन्ति कुयोनिषु ॥३७॥

लोभात् क्रोधः प्रभवति, क्रोधाद् द्रोहः प्रवर्तते ।
द्रोहेण नरकं याति, शास्त्रज्ञोऽपि विचक्षणः ॥३८॥

यद् दुर्गामटवीमटन्ति विकटं, क्रामन्ति देशान्तरं,
गाहन्ते गहनं समुद्रमतनु–क्लेशां कृषिं कुर्वते ।
सेवन्ते कृपणं पतिं गजघटासंघट्टदुःसंचरं,
सर्पन्ति प्रधनं धनान्धितधियस्तल्लोभविस्फूर्जितं ॥३९॥

मातरं पितरं पुत्रं, भ्रातरं वा सुहृत्तमम् ।
लोभाविष्टो नरो हन्ति, स्वामिनं वा सहोदरम् ॥४०॥

सुमहान्त्यपि शास्त्राणि, धारयन्तो बहुश्रुताः ।
छेत्तारः संशयानां च, क्लिश्यन्ते लोभमोहिताः ॥४१॥

एकामिषाभिलाषेण, सारमेया इव द्रुतं ।
सोदर्या अपि युध्यन्ते, धनलेशजिघृक्षया ॥४२॥

निःशेषधर्मवनदाहविजृम्भमाणे,
दुःखौघभस्मनि विसर्पदकीर्तिधूमे ।
बाढं धनेन्धनसमागमदीप्यमाने,
लोभानले शलभतां लभते गुणौघः ॥४३॥

ये केचित्सिद्धान्ते, दोषाः श्वभ्रस्य साधकाः प्रोक्ताः ।
प्रभवन्ति निर्विचारं, ते लोभादेव जन्तूनाम् ॥४४॥
स्वामिगुरुबन्धुवृद्धान-बलाबलांश्च जीर्णदीनादीन् ।
व्यापाद्य विगतशङ्को, लोभार्तो वित्तमादत्ते ॥४५॥

वर्धस्व जीव जय नन्द विभो ! चिरं त्वं,
इत्यादिचाटुवचनानि विभाषमाणः ।
दीनाननो मलिननिन्दितरूपधारी,
लोभाकुलो वितनुते, सधनस्य सेवाम् ॥४६॥

लोभेन रात्रौ न सुखेन शेते, लोभेन लोकः समये न भुङ्क्ते
लोभेन काले न ददाति दानं, लोभेन काले न करोति धर्मम् ॥
अपि नाम्भैव पूर्येत, पयोभिः पयसां पतिः ।
न तु त्रैलोक्यराज्येऽपि, प्राप्ते लोभः प्रपूर्यते ॥४८॥
शाकेनापीच्छया जातु, न भर्तुमुदरं क्षमाः ।
लोभात् तथापि वाञ्छन्ति, नराश्चक्रेश्वरश्रियम् ॥४९॥

शेते नित्यं शटितकटिते, मञ्चके भग्नपादे,
भुङ्क्ते स्तोकं तदपि कुथितं, जीर्णमन्नं क्षुधार्तः ।
धत्ते जीर्णं मलमलिनितं, वस्त्रखण्डं च कन्थां,
एवं लोभी द्रविणमधिकं प्रत्यहं संचिनोति ॥५०॥

भुजङ्गमगृहगोधाः स्युः, मूषकाः पञ्चेन्द्रिया अपि ।
धनलोभेन जायन्ते, निधानस्थानभूमिषु ॥५१॥
पिशाचमुद्गलप्रेत—भूतयक्षादयो धनं ।
स्वकीयं परकीयं वा,ऽध्याधितिष्ठन्ति लोभतः ॥५२॥
भूषणोद्यानवाप्यादौ, मूर्छिताश्चिवशा अपि ।
च्युत्वा तत्रैव जायन्ते, पृथ्वीकायादियोनिषु ॥ ॥५३॥
चक्रेशकेशवहलायुधभूषितोऽपि,
सन्तोषमुक्तमनुजस्य न तृप्तिरस्ति ।
तृप्तिं विना न सुखमित्यवगम्य सम्यग् ।
लोभग्रहस्य वशिनो न भवन्ति धीराः ॥५४॥
बुद्धिश्चलति लोभेन, लोभो जनयते तृषां ।
तृषार्तो दुःखमाप्नोति, परत्रेह च मानवः ॥५५॥
सर्वेषामेव शौचानां, अर्थशौचं विशिष्यते ।
अर्थेषु शुचिर्यो जीवः, न हि वृद्धादिभिः शुचिः ॥
लोभाविष्टो नरो वित्तं, वीक्षते न चापदं ।
दुग्धं पश्यति मार्जारो, यथा न लगुडाहतम् ॥५७॥
सम्यग्दर्शनबोधसंयमतपः, शीलाविभाजोऽपि नो,
संक्लेशो विनिवर्तते भवभृतो, लोभानलं बिभ्रतः ।

विश्राणस्य विचित्ररत्ननिचितं दुःप्रापपारं पयः,
सन्तापं किमुदन्वतो न कुरुते, मध्यस्थितो वाडवः ॥
लोभात् क्रोधः प्रभवति, लोभात् कामः प्रजायते ।
लोभात् मोहश्च नाशश्च, लोभः पापस्य कारणं ॥५९॥
लब्धेन्धन ज्वलनवत्, धरणतोऽतिवृद्धि ।
लाभेन लोभवह्नः समुपैति जन्तोः ।
विद्यागमव्रततपःशमसंयमादीन् ।
भस्मीकरोति यमिनां स पुनः प्रवृद्धः ॥६०॥

लोभाक्रान्तहृदये प्रशस्तगुणगणा अवकाशं न लभन्ते स च लोभो जीवितारोग्येन्द्रियोपभोगभेदाच्चतुर्विधो भवति। पुनः स प्रत्येकं स्वपर-विषयाद् द्विधा भवति ।

उपभोगेन्द्रियारोग्य–प्राणात् स्वस्य परस्य च ।
गृध्यन् मुग्धः प्रबन्धेन किमकृत्यं करोति न ॥६१॥

तथाहि

| | |
|---|---|
| १ स्वजीवितलोभः | ५ स्वेन्द्रियलोभ. |
| २ परजीवितलोभः | ६ परेन्द्रियलोभः |
| ३ स्वारोग्यलोभः | ७ स्वोपभोगलोभ, |
| ४ परारोग्यलोभः | ८ परोपभोगलोभः |

एवमष्टविधलोभाभावे सति मुक्तिस्त्रीचित्तरञ्जकः शौचधर्मो भवेत् ।

तावत्कीर्त्यै स्पृहयति नरस्तावदन्वेति मैत्रीं ।
तावद् वृत्तं प्रथयति विभ–र्त्याश्रितान् साधु तावत् ।।
तावज् जनात्युपकृतमघाच्छङ्कते तावदुच्चैः,
तावन्मानं वहति न वशं, याति लोभस्य यावत् ।।५८।।
"एकोऽपि पातयामास, लोभः सर्वगुणानि वा"
लोभमूलानि पापानी–त्येतद् यन्न प्रमाण्यते ।
स्वयं लोभाद् गुणभ्रंशं, पश्यन्तः श्यन्तु तेऽपि तम् ।।

धनलोभफलमाह–

वित्तार्थं चित्तचिन्तायां, न फलं परमेनसः ।
अतीवोद्योगिनोऽस्थाने, न हि क्लेशात् परं फलम् ।।६०।।

लोभिपिण्याकगन्धस्याख्यान श्रूयताम्–

षड्धाः क्षितेस्तृतीयेऽस्मिल्लल्लके दुःखमल्लके ।
पेते पिण्याकगन्धेन, धनायाऽविद्धचेतसा ।।६१।।

पञ्चालदेशेषु त्रिदशनिवेशानुकूलोपशल्ये काम्पिल्ये निजमति-माहात्म्यापहसितामराचार्यप्रतिभः रत्नप्रभो नाम नृपतिः आत्मीयकपोलकान्तिविजितामृतमरीचिमण्डला मणिकुण्डला नामाऽस्य महादेवी । कुलक्रमागतात्मोपार्जिताऽमितवित्तः सागरदत्तो नाम श्रेष्ठो । गृहस्य श्रीरिव धनश्रीर्नामाऽस्य भार्या । सूनुरनयो र्न्याय्यार्थोपार्जनैकचित्तः सुदत्तो नाम । स महालोभविभावसुज्वलच्चित्तः सागरदत्तः, पुरुषपरम्परायातायाः काञ्चनकोटरैकस्याः

स्वयमुपार्जितार्थकोटेः पति भवन्नपि शालीयाविभक्तभोजने द्वितय तुषापनीतिघावनाश्रावणकृतिश्च, शाकपाकविधाने संभाराविकृतिः प्रसभाभ्यवहृतिश्च, घार्तपूरपूरिमावेष्टिमादिभक्षोपक्षेपे महती स्नेहापत्तिरिन्धनविरतिश्च, दुग्धदधिघोलरसाद्युपयोगे न विक्रयाय घृतं न च तक्रं कडङ्करायेति च मन्यमानः स्वयमेव प्रतिदिवसवृद्धिग्रहणाय स्वजलोकपाटके विहरमाणःप्रति पितृप्रियधन्त्रमुपसृत्य श्रा सुरभिः खल्वेष खलः संजातः इति सस्मेरं व्यहरन्, गृहीत पिण्डिखण्डः प्रत्यवसानसमये तद्गन्धमाजिघ्रन् सन्, सर्वलोकपरिहृतमनवधिकालोषितमतिसमर्घता गतमकाण्डतमेव च स्थाली विलीयं भवति, तत्केवलावन्तिसोमसहायमाहरति। अत एवास्य महामोहानुबन्धस्य पिण्याकगन्ध इति जगति नाम प्रथे। मुखामोदमात्रेण च प्रयोजनम्। तदलं ताम्बूलार्थमर्थव्ययेन इति विचिन्त्य विष्णुतरुत्वचः कालवल्लीदलोत्तरास्वादरुचः कवलयति। अर्घप्राणोदरः परिवारः कदाचिदपि देहे हृदये वा न मनागपि विकुरुते इति मत्वा न कमप्यूर्घपूरं पूरयति।

प्रतिचारकांश्चैवं शिक्षयति न तैलार्थम् लवणार्थम् वित्तं व्ययितव्यं। किं तु कार्षापण माषं चादाय आपणमुपढौक्य तदुभयं गृहीत्वा पुनरिदं साधु न भवतीति प्रतिसमर्पयंस्तत्र माषे किञ्चिल्लग्नमायाति तेन शारीरो विधिर्विधातव्यः। परिजनार्भकान् स्वीकार्यांश्चैवमुपजपति न भवद्भिरङ्गाभ्यङ्गार्थम् भवनमुद्घोत व्ययम् किं तु सस्नेहदेहैः प्रातिवेशिकशिशुसन्दोहैः सहाऽतिसम्बाधं

योद्धव्यम्। अतो भवतामनुपायसन्निधिः स्नानविधिः। क्षपायां च प्रतिवेशवेश्मप्रदीपप्रभाप्रज्वलितेन वल्मीकास्थावलम्बितेन काचमुकुरेण गृहाङ्गणे प्रदीपकार्यम् निकाय्यमध्ये च सणसरवकस्रोतैः, विषमरुचिदीप्तं रुरुवृकबीजैः करोति। सकलजनसाधारणाश्च नवीन सञ्जा एव युगा सपरिच्छदः परिदधाति। मनाम् मलीमसरागाश्च विक्रीणीते। ततोऽस्य वमनवावनार्थमपि न कपर्दकोपक्षयः। पर्वाणि च पुराणपल्लवकचवरानयनकणोत्करेणातपतप्तसवाट स्नेहद्रवेण गुडगोणीक्षालनकषायेण च निवर्तयति। प्रत्यामन्त्रणेन द्रविणव्ययात् परागारभोजनावलोकनेनाश्रितजनमनोविनाश भयाच्चामन्त्रितो न कस्यापि निकेतने व्रजति। एवमतीवतर्षोत्कर्षं रसहार्ये सकलकदर्याचार्ये तस्मिन् जीवत्यपि मृतकल्पमनर्थ वसति सति एकदा स लक्ष्मीकमलिनीपरिमलनकलभो रत्नप्रभा राजसिन्धुरप्रधावसंदर्शनप्रासादसंपादनाय अकलाभवभृत्तस्य श्रुत दत्तस्य महीपतेः कालेन स्थण्डिलनालुप्तावकाशे भवनप्रदेशे भूशोधनं विधापयन् एतन्स्थानमञ्जुषाभोगमञ्जुषः प्रकामोषर दोषकलुषवपुषः संपूर्णविस्तारपुषः प्रथिमगुणविशिष्टकाः सुवर्णेष्टकाः समालोक्य बहिर्निकामं कलङ्कमलिनत्वाविदितरेष्टकाविशिष्ट त्वमाकलयन् एताः खलु चैत्यालयनिर्माणाय योग्याः इति चेतसैकत्र स्तूपतामानाययामास। अत्रान्तरे समस्तमित्रंपचपुरोगम सगन्धः पिण्याकगन्धः सरभसमापतताम्मिष्टका वहतां वैवर्णिकनिवहानां सायं समये मार्गविषये पतितामेकामिष्टकामवाप्य चलन

क्षालनदेशे न्याधात् । तत्र च प्रतिघस्नमङ्घ्रि संघर्षादशेषकालुष्यमोषे धर्मनिर्मितत्वमवेत्य तैस्तैः प्रलोभनवस्तुभिः काचवहनां विहितोपचारस्ताः संगृह्णन् श्रुतस्तत्स्त्रीयापायोदन्तः स्फायमानमनोमन्युकृतान्तः पिण्याकगन्धः भो पुत्र ! निखिलकलावदातचित्त सुदत्त भवत्पितृस्वसुः सुतशोकशंकुशमनाय मयाऽवश्यं तत्र गतव्यमपस्नातव्यं च । तत स्त्वयाऽप्येताः परिस्कन्दलोकप्रलोभनेन साधु संग्रहीतव्याः इत्युपह्वरे व्याहृत्य सकलजगद्व्यवहारावतार त्रिवेद्यां काकन्द्यां तोकशोकभूयिष्ठाया स्तूर्णम् कनिष्ठाया दर्शनार्थमगच्छत् । असद्व्यवहारव्यावृत्त सुदत्त तातोपदेशमनिःश्रेयसमवस्यन् यतो राजपरिगृहीततृणमपि गृहीतं कञ्चनीभवति संपद्यते च पूर्वोपार्जितस्याप्यर्थस्यापहाराय जातमतिः नैकापीष्टकां समग्रहीत, महालोभलोलतान्धः पिण्याकगन्धस्तस्याः पुरोऽपस्नायागतः सुतमप्राक्षीत् वत्स ! कियतीः खलु त्वमिष्टकाततीः पर्यग्रहीः ! स्तेययोगविनिवृत्तः सुदत्तः तात ! नैकामपि प्रादुर्भवद्दीर्घदुर्गति दुरितबन्धः पिण्याकगन्धः समर्थे सदाचारकृतार्थे पुण्यभाजि नुजि परमुत्तरमपश्यन् यदोभौ क्रमौ परिक्रमणमक्षौ मम नाभविष्यता तदा कथङ्कारमहं मन्मनोरथवन्ध्यां काकन्द्यामगमिष्यं । अत एतावेवात्रश्रीविरामावहौ द्रोहौ इति विचिन्त्योद्वर्तनं वर्तयन्त्याः स्ववासिन्याः करादाक्षिप्तशरीरेण शिलापुत्रकेण तौ जर्जरितावजीजनत् । एतच्च वैदेहकाभ्यञ्जनपरिजनात् प्राचीनबर्हिनिभः क्षितिरमणीकरिणीभः रत्नप्रभः श्रुत्वा वासीवक्रेण शिल्पभिर्विधापितेष्टकातक्षणः, प्राणसंहाराय वेति

सुवर्णत्वं निर्णीय विहितसर्वस्वापहारं सनिकारं नगरजनोच्चार्यमाणदुरपवादप्रबन्धं पिण्याकगन्धं निरवासयत्। इन्द्रियमस्थाने हि गुणदोषयोर्महीपतयः इति नीतिवाक्यमनुस्मृत्य मूल्यधनप्रदानेनान्वयागतनिवासनिवेदनेन च परद्रव्यादाननिवृत्तं सुदत्तं साधु समाश्वासयत्। स तथा निर्वासितः सञ्जातनरकनिषेकनिबन्धः कृतप्रकामलोभसम्बन्धः चिरायोपार्जितदुरन्तदुःखसंस्कन्धः पिण्याकगन्धः प्रेत्य पातालमगात् ॥

**अत्यर्थमर्थकाङ्क्षाया—मवश्यं जायते नृणां**
**अघसंघचितं चेतः, संसारावर्तवर्तगम् ॥६२॥**

*तृष्णा*— तृष्णाप्रपञ्चतो नान्यत् नरकं घोरमुच्यते बाह्याभ्यन्तरग्रन्थस्यागसिद्धये सद्भि राशां निराकृत्य नैराश्यमवलम्ब्यते अनिरुद्धा आशा सती विश्वं प्रसर्पति। निबद्धमूलाऽसौ आशा पुनः छेत्तुं न शक्यते, यद्याशा शान्तिमायाता तदा समीहितं सिद्धं। अन्यथा भवसम्भूतो दुःखवार्द्धि दुस्तरो भवति, लोकानामाशैव यमप्रशमराज्यस्य सद्बोधार्कोदयस्य विवेकस्य च प्रतिषेधिकाऽस्ति, यः सर्वतोमाशामपि रक्षितु न क्षमस्तस्यापवर्गसिद्धयर्थम् परिश्रमं वृथा॥ देहिनामाशापिशाची मनोमस्तकरणे मन्दिरा, आशैव विषमञ्जरी। आशामूलानि दुःखानि प्रभवन्ति, यैराशा राक्षसी हृता त एव धीराः सुखिनः सन्तिः, तैरेव महाव्यसनसंकीर्णः क्लेशसागर उत्तीर्णः। येषामाशा तेषां मनःशुद्धिः कुतः, यः सर्वाशां निराकृत्य नैराश्यमवलम्बते तस्य स्वान्तं सङ्कल्पैः क्वचिदपि कदापि न लिप्यते।

## चतुःकषायनिवारणोपायमाह

शमाम्बुभिः क्रोधशिखी निवार्यतां,
नियम्यतां मानमुदारमार्दवैः ।
इयं च मायाऽऽर्जवतः प्रतिक्षणं,
निरीहतां चाश्रय लोभशान्तये ॥१॥

क्षमया क्रोधकषायं, मानकषायं च मार्दवेनैव ।
मायामार्जवलाभात्, लोभकषायं शौचतो जयतु ॥२॥

जेतव्यः क्षमया क्रोधो, मानो मार्दवसम्पदा ।
आर्जवेन सदा माया, लोभः सन्तोषयोगतः ॥३॥

क्षमा क्रोधस्य मानस्य, मार्दवं त्वार्जवं पुनः ।
मायायाः सङ्गसंन्यासो, लोभस्यैते द्विषः क्रमात् ॥४॥

पाषाणभूरजोवारि–लेखासदृशत्वभाग् भवन् ।
क्रोधो यथाक्रमं गत्यै, श्वभ्रतिर्यङ्नृनाकिनाम् ॥५॥

शिलास्तम्भास्थिसार्द्रैघ्र–वेत्रवृत्ति द्वितीयकः ।
श्वभ्रःपशुनर स्वर्ग–गति सङ्गतिकारणं ॥६॥

वेणुमूलैरजाशृङ्गै, र्गोमूत्रैश्चामरैः समा ।
माया तथैव जायेत, चतुर्गतिवितीर्णये ॥७॥

क्रिमिनीलीवपुर्लेप, हरिद्रारागसन्निभः ।
लोभः कस्य न संजातस्तद्भवसंसारकारणम् ॥८॥

चतुःकषायाणां प्रत्येकं चतस्रोऽवस्था दृष्टान्तविशेषं स्पष्टयन् प्राह

दृशदवनिरजोऽब्–राजिवदश्मस्तम्भास्थिकाष्ठवेत्रकवत् ।
वंशाङ्घ्रिमेषशृङ्गोक्षमूत्रचामरवदनुपूर्व ॥१०॥
क्रिमिचक्रकायमल रजनिरागवदपि च पृथगवस्थाभिः ।
कुन्तानदम्भलोभा नारकतिर्यङ्नृसुरगतीः कुर्युः ॥११॥
अंतोमुहुत्तपक्खं, छ मासं संखसंखणंतभवं ।
संजलणमादियाणं, वासणकालो दु णियमेण ॥१२॥
पढमो दंसणघाई, विदियो तह देसविरदिघाई य ।
तदियो संजमघाई, चउत्थो अहक्खादघाई य ॥१३॥
यदि क्रोधादयः क्षीणा,स्तदा किं खिद्यते वृथा ।
तपोभिरथ तिष्ठन्ति, तपस्तत्राप्यपार्थकम् ॥१४॥

कषायशमनफलमाह–

स्वसंवित्ति समायाति, यमिनां तत्त्वमुत्तमम् ।
आसमन्तात् शमं नीते, कषायविषमज्वरे ॥१५॥

यस्याशा पिशाची निधनं गता तस्य तत्त्वरुचि. विवेक: वृत्तं च सफलं भवति। यस्य चेत. निराशासुधापूरै: पवित्रितं तं बद्धस्नेहा उपशमश्री: सोत्कण्ठमालिङ्गति, तेषामेव ज्ञानपादप. सुखफलं ददाति, आशानलदीपित: शक्रोऽपि स्वर्गे सुखी न स्यात् । सर्वाशानलं विध्याप्य यमिन: शिवं श्रयन्ति। नैराश्याधिष्ठितात्मनां स्वान्तं चापलं त्यजति, अक्षदन्तिनो विक्रियां त्यजन्ति, कषायाग्नि: प्रशाम्यति, अत्र बहुनोक्तेन किं यस्याशा निधनं गता स एव लोकद्वय विशुद्धये महतां सेव्य: । आशा जन्मोग्रपङ्काय भवति आशाविपर्यय: शिवाय भवति ।

**आशा नाम नदी मनोरथजला, तृष्णातरङ्गाकुला,**
**रागग्राहवती वितर्कविहगा, धैर्यद्रुमध्वंसिनी ।**
**मोहावर्तसुदुस्तराऽतिगहना, प्रोत्तुङ्गचिन्तातटी,**
**तस्या: पारगता विशुद्धमनसो, नन्दन्ति योगीश्वरा: ॥**

एवमाशानिराशयो गुणदोषौ विज्ञाय गुणात्मक: शौचधर्म: परिपालनीय: ।

**ॐ ह्रीं उत्तमशौचधर्माङ्गाय नम:**

**शौचं लोभविनिर्मुक्तं, मुक्तिश्रीचित्तरञ्जकं ।**
**पूजया परया भक्त्या, पूजयामि तदाप्तये ॥**

**ॐ ह्रीं परमब्रह्मणे उत्तमशौचधर्माङ्गाय नम:**
**अर्घ्यं निर्वपामीति स्वाहा ॥**

# उत्तमसत्यधर्मः

## मङ्गलाचरणम्

स्मरकरिमृगराजः पुण्यकञ्जाह्निराजः,
सकलगुणसमाजः सर्वकल्पावनीजः ।
स जयति जिनराजः प्रास्तवुष्कर्मबीजः
पदनुतसुरराजस्त्यक्तसंसारमूजः ॥ १ ॥

संसारसागरनिमग्नशरीरिवृन्दं ।
उद्धृत्य यो धरति मोक्षनिकेतनान्तः ।
सज्ज्ञानभानुविदिताखिलवस्तुतत्त्वैः ।
प्रोक्तो जिनैरखिलसौख्यकरः स धर्मः ॥ २ ॥

*सत्यधर्मलक्षणं* -- सत्सु प्रशस्तेषु दिगम्बरेषु तदुपासकेषु च श्रेष्ठलोकेषु यद्वचनं साधु तत्सत्यमुच्यते । ये प्रव्रज्यां प्राप्ता स्तद्भक्ता वा तेषु यद्ववचनं तत्सत्य । मुनिश्वरैर्यत् तथ्यं, हितं, मित, सार जिनसूत्रानुगं निष्पाप करुणाक्रान्तं रागद्वेषादि दूरगं धर्मज्ञानोपदेशाय वचनं ब्रूयते तत्सत्यं । यावत्सत्यं तावद् धर्म., यावद् धर्म स्तावत् शान्तिः । तत्सत्य सत्यासत्योभयानुभयभेदेन चतुर्धा । तत्रासत्योभयवचनं शुभातिग सर्वपापाकरं त्याज्य । सत्यानुभयवचन तु जगच्छर्मविधायि निष्पाप धर्मसिद्धये संयतैः

नित्यं वक्तव्यं। सत्येन वचसा शशिनिर्मला परमा कीर्ति लोकत्रये भ्रमेत्। तथाचोक्तम्

चन्द्रमूर्तिरिवानन्दं, वर्धयन्ती जगत्त्रये।
स्वर्गिभिर्घ्रियते मूर्ध्ना कीर्तिः सत्योत्थिता नृणाम्॥

सत्यवचनप्रभावेन पुरुषाणां मुखे विश्वदीपिका भारती निवासं करोति सत्येन पुंसां बुद्धि विश्वतत्त्वपरीक्षायां निकषग्रावसन्निभा संपद्यते।
येन सत्यवचसा स्थिरं वैराग्यं जायते, सद्गुणा वर्धन्ते, रागाद्या विलीयन्ते कामकोपादयश्शाम्यन्ति। दुर्ध्यानानि नश्यन्ति, साधुना धर्मतत्त्वदर्शक मिष्टवचो वाच्यं। अनेन वचसा मे ऽन्येषां शुभ-वाऽशुभं हितमहितं वा श्रेयो वा ऽश्रेय इति चित्ते पूर्वं विचार्य पश्चात् धर्मतत्त्वबोधाय स्वागमानिन्दितवचो वदन्तु। एवं भूत-विचाराभावे सर्वार्थसिद्धिद मौनं कुर्वन्तु साधव। स्वपरतत्त्वज्ञा सुनृतं वचो वदन्तु। तथाचोक्तम्

जिणवयणमेव भासदि, तं पालेदुं असक्कमाणो वि
ववहारेण वि अलियं, ण वददि जो सच्चवाई सो॥ ३॥
असत्यं विरतो सत्यं, सत्स्वसत्स्वपि यन्मतं।
वाक्समित्यां मितं तद्धि, धर्मे सत्स्वेव बह्वपि ॥ ४॥

*अनृतविरतिमहाव्रते* :— सत्सु असत्सु वा बहुपिवचनं
*भाषासमितौ* :— सत्सु वा असत्सु मितवचनं
*सत्यधर्मे* — सत्सु भक्तेषु च मितं प्रभूत च वचनम्

## *सत्यधर्मप्रशंसामाह*

सत्यमेव वदेत् प्राज्ञः, सर्वभूतोपकारकं ।
यद्वा तिष्ठेत् समालम्ब्य, मौनं सर्वार्थसाधकम् ॥ ५ ॥

साधुरत्नाकरः प्रोद्यत्–दयापीयूषनिर्भरः ।
समये सुमनस्तृप्त्यै, वचनामृतमुद्गिरेत् ॥ ६ ॥

मौनमेव सदा कुर्या–दार्यः स्वार्थैकसिद्धये ।
स्वैकसाध्ये परार्थे वा, ब्रूयात् स्वार्थाविरोधतः ॥ ७ ॥

मौनमेव हितं पुंसां, शश्वत् सर्वार्थसिद्धये ।
वचो वाऽतिप्रियं तथ्यं, सर्वसत्त्वोपकारि यत् ॥ ८ ॥

धर्मनाशे क्रियाध्वंसे, स्वसिद्धान्तार्थविप्लवे ।
अपृष्टैरपि वक्तव्यं, तत्स्वरूपप्रकाशने ॥ ९ ॥

स्वपरहितमेव मुनिभि र्मितममृतसमं सदैव सत्यं च ।
वक्तव्यं वचनमथ प्रविधेयं धीधनै र्मौनम् ॥ १० ॥

१ सत्यं २ हितं मितं, ब्रूयाद् मर्महिंसाविवर्जितं ।
धर्मोपदेशकं सारं, श्रोतृश्रवणसौख्यदम् ॥ ११ ॥
१ अनृताद्विरतिः सत्यं-व्रतं जगतिपूजितम्, २ उपकारकम्
हत्वा हास्यं कफवल्लोभमपस्यामवद् भयं भित्वा ।
वातवदपोह्य कोपं, पित्तवदनुसूत्रयेद् गिरं स्वस्थः ॥ १२ ॥
सदा सत्यवादा-दनुल्लङ्घ्यवाक्यो,
वचः सिद्धिमिद्धां परिप्राप्य पश्चात् ।
त्रिलोक्यैकशास्ता नरश्चाऽऽत्मनावो,
भवेद् निर्वृतिश्रीवधूरम्यहर्म्यः ॥ १३ ॥
सत्यं वदन्ति मुनयो, मुनिभि विद्या विनिर्मिताः सर्वाः ।
म्लेच्छानामपि विद्याः, सत्यभृतां सिद्धिमायान्ति ॥ १४ ॥
सत्यं ब्रूयात् प्रियं ब्रूयात्, न ब्रूयात् सत्यमप्रियं ।
प्रियं च नानृतं ब्रूया, देष धर्मः सनातनः ॥ १५ ॥

पुरुषस्यैकमपि प्रियवचो दोषशत प्रमार्जयितुं प्रभु । यथा प्राणिनो मधुरवचसा तुष्यन्ति वस्तुदानाद्यै र्न तथातुष्यन्ति । जगत्पूज्ये शुभाकरे मधुरे वचसि सति कः सुधी जगन्निन्द्य कटुकमसत्यं वदेत् । तथाचोक्तम्

नरस्य चन्दनं चन्द्र-चन्द्रकान्तमणिजलं ।
न तथा कुरुते सौख्यं, वचनं मधुरं यथा ॥ १७ ॥

एकाऽपि कला सकला, वचनकला किं कलाभिरन्याभिः ।
वरमेका कामगवी, जरद्‌गवीं किं सहस्रेण ॥ १८ ॥

वचनादेव उपकारापकारौ भवतः, दुर्जनसज्जनौ धर्म्यधर्मिणौ ज्ञान्यज्ञानिनौ जायेते ।

आप्रत्वं सौमनस्यं च, कुर्यात् सद्रागलं परैः ।
अजलाशयसम्भूत—ममृतं हि सतां वचः ॥ १९ ॥

वश्या भवन्ति सत्येन, देवताः प्रणमन्ति च ।
विमोचयन्ति सत्येन, ग्रहाः पान्ति च स्फुटम् ॥ २० ॥

नरो मातेव विश्वास्यः, पूज्यो गुरुरिवाऽखिले ।
सत्यावादी प्रियो नित्यं, स्वबन्धुरिव जायते ॥ २१ ॥

भाषमाणो नरः सत्यं, लभते प्रीतिमुत्तमाम् ।
बुधानन्दकरीं कीर्ति, शशाङ्ककरसुन्दराम् ॥ २२ ॥

सम्पद्यन्ते गुणाः सर्वे, संयमो नियमस्तपः ।
गुणानामालयः सत्यं, मत्स्यानामिव नीरधिः ॥ २३ ॥

बुधजनपरिसेव्यं, स्वर्गमोक्षैकद्वारं
सकलसुखनिधानं, धर्मबीजं गुणाढ्यं ।
जिनवचनपवित्रं सर्वपापापहारं,
शिवकरमतिसारं त्वं वचो ब्रूहि सत्यम् ॥ २४ ॥

विश्वासायतनं विपत्तिदलनं देवैः कृताराधनम्,
मुक्तेः पथ्यदनं जलाग्निशमनं व्याघ्रोरगस्तम्भनम् ।
श्रेयः संवननं समृद्धिजननं सौजन्यसंजीवनं,
कीर्तेःकेलिवनं प्रभावभवनं सत्यं वचः पावनम् ॥ २५ ॥

सत्यवाचि प्रतिष्ठिताः सर्वा गुणसम्पदः सत्यधर्मावलम्बिनां धीमतां इन्द्रादयोऽपि प्रत्यूहकर्तुम् न शक्ताः । क्रूरसर्पाद्या दंशितु न समर्थाः । अग्निः सत्यवादिनं न दहति । सिंहा न खादन्ति,

दह्यते न हुताशेन, न निमज्जति वारिणि ।
धन्यः सत्यबलोपेतो, नरो गङ्गाऽपि नोह्यते ॥ २६ ॥

तस्याग्निर्जलमर्णवः स्थलमरिर्मित्रं सुराःकिङ्कराः ।
कान्तारं नगरं गिरिर्गृहमहिः, माल्यं मृगारि मृंगः ।
पातालं बिलमस्त्रमुत्पलदलं, व्यालः शृगालो विषम् ।
पीयूषं विषमं समं च वचनं, सत्याञ्चितं वक्ति यः ॥ २७ ॥

"सर्वत्र सर्वदा च सत्येनैव गौरवं लभते"

सति सन्ति व्रतान्येव, सूनृते वचसि स्थिते ।
भवत्याराधिता सद्भिः, जगत्पूज्या च भारती ॥ २८ ॥

आस्तामेतदमुत्र सूनृतवचाः, कालेन यल्लप्स्यते,
सद्भूपास्य सुरत्व-संभृति सरित्पाराप्तिमुख्यं फल ।

तत् प्राप्नोति यशःप्रथात् विशदं, सिद्धेषु सन्मान्यतां ।
तत्साधुत्वमिहैव जन्मनि परं, तत्केन संकल्प्यते ॥ २९ ॥
जिह्वाग्रस्य सर्पिणी नित्यं, स्थिता स्वव्यवने किल ।
लोकं जिघ्रति तुण्डाग्रे, सत्यमन्त्रेण कीलय ॥ ३० ॥

## अथ दशविधसत्यमाह

देशसम्मतिनिक्षेप, नामरूपप्रतीतितः ।
संभावनोपमाने च, व्यवहारो भाव इत्यपि ॥ ३१ ॥

१ *जनपदसत्यं* :- नानादेशभाषाभिः संवृत्तमनुस्यूतं वस्तु कथ्यते, तत् जनपदाभिधं सत्यं, यथा लोके लोकैः सर्वं भाषाभिरोदनं किन्तु द्रविणभाषायां चीरः कथ्यतेऽत्र विवादो न विद्यते ॥ १ ॥

२ *संमतिसत्यं* :- बहुभिर्यत् सम्मतं तत् सम्मतिसत्यं, यथा लोके मानुष्यपि राजपत्नी महादेवी कथ्यते ॥ २ ॥

३ *निक्षेपसत्यं* :- यत् प्रतिबिम्बं स्थाप्यते तत् स्थापनासत्यं यथाऽर्हत्सिद्धयतीनां च प्रतिमा स्मरणकृतये कथ्यते ॥ ३ ॥

४ *नामसत्यं* :- गुणैरनपेक्ष्य वक्तव्यं यत् नाम कथ्यते तन्नाम सत्यं यथा कस्यचित् पुत्रो देवदत्त इति नाम ॥ ४ ॥

५ *रूपसत्यं* :- मुख्यवर्णेन यद्रूपं उच्यते तद्रूपसत्यं यथा

बलाकायां वर्णान्तरे सत्यपि श्वेतवर्णस्य मुख्यत्वेन बलाका श्वेता इति कथ्यते ॥ ५ ॥

६ *प्रतीतिसत्यं* :- अन्यापेक्षया यत् सिद्धं तत्प्रतीतिसत्यं यथा अस्य ह्रस्वस्यापेक्षया अयं दीर्घं इति कथ्यते ॥ ६ ॥

७ *सम्भावनासत्यं* :- शक्याऽशक्यभेदाभ्यां यद् विविध कार्यं कर्तुमीहते तत्संभावनासत्यं, यथाऽयं पुरुषो बाहुभ्यां समुद्रं तर्तुमीहते ॥ ७ ॥

८ *उपमासत्यं* :- औपम्येन संयुक्तं यद्वचन ब्रूयते तदुपमा-सत्यं यथा पल्योपमादय ॥ ८ ॥

९ *व्यवहारसत्यं* :- ओदने सिद्धेऽपि लोकव्यवहारानुसारेण ओदनं पचेति यद् वचन तद् व्यवहारसत्यं ॥ ९ ॥

१० *भावसत्यं* :- छद्मस्थज्ञानस्य द्रव्ययाथात्म्यादर्शनेऽपि संय-तस्य संयतासंयतस्य वा स्वगुणपरिपालनार्थं प्रासुकमिदमप्रासु-कमित्यादि यद्वचनं तद्भावसत्यं यथा निरीक्ष्यस्व प्रयताचारो भवति, इत्येवमादिकं वचन भावसत्यं कथ्यते, अहिंसा-धर्मपालनाङ्गत्वात् ।

*अथवा*—हिंसादिदोषदूरं यत् सत्यमसत्यं वा वचन उच्यते तद् भावसत्यं, यथा त्वया चौरो दृष्टो न मया दृष्ट इत्युच्यते ।

**सत्यं नाम्नि नरीश्वरो, जनपदे चोरोऽन्धसि स्थापने,**

**देवोऽक्षाविषु वारयेवपि गिरिं शीर्षेण संभावने ।**

मावे प्रासु पचोदनं व्यवहृती दीर्घः प्रतीत्येति ना ।
पल्यं चोपमितो सितः शशधरो रूपेऽम्बुजं सम्मती ॥ ३२ ॥

## दशप्रकारसत्यमाह

देशेष्ट स्थापनानाम–रूपापेक्षाजनोक्तिषु ।
संभावनोपमा भावेष्विति सत्यं दशात्मना ॥ ॥ ३३ ॥
ओदनोऽप्युच्यते चोरो, राज्ञी देवीति संमता ।
दृषदप्युच्यते देवो, दुर्विधोऽपीश्वराभिधः ॥३४॥
दृष्टाधराविरागापि, कृष्णकेश्यपि भारती ।
प्राचुर्यात् श्वेतरूपस्य, सर्वशुक्लेति सा स्तुता ॥ ३५ ॥
ह्रस्वापेक्षो भवेद् दीर्घः पच्यन्ते किल मण्डकाः ।
अपि मुष्ट्या पिनष्टीन्द्रो, गिरीन्द्रमपि शक्तितः ॥ ३६ ॥
अतद्रूपापि चन्द्रास्या, कामिन्युपमयोच्यते ।
चौरे दृष्टेऽप्यदृष्टोक्ति, रित्यादि वदतां नृणाम् ॥ ३७ ॥
स्यात् मण्डलाद्यपेक्षायां, सत्यं दशविधं वचः ।

"हितावह दोषोज्झितं वच सदैव वक्तव्यम्
सत्यवाक् पुरुषः सत्यसामर्थ्याद् वचः सिद्धि समश्नुते ।
"वाणी चास्य भवेन्मान्या, यत्र यत्रोपजायते"

## सत्यवचनफलमाह

सुस्वरः स्पष्टवागिष्ट मतव्याख्यानदक्षिणः ।
क्षणाद्निर्जितारातिः असत्यविरते भवेत् ॥ ३८ ॥

## द्वादशप्रकारभाषामाह

हिंसाद्यकर्तुः कर्तुर्वा, कर्तव्यमिति भाषणं ।
अभ्याख्यानं प्रसिद्धो हि, वागादि कलहः पुनः ॥ ३९ ॥
दोषाविष्करणं दुष्टैः, पश्चात् पैशुन्यभाषणम् ।
भाषा बद्धप्रलापाख्या, चतुर्वर्गविवर्जिता ॥ ४० ॥
रत्यरत्यभिधे बोसे, रत्यरत्युपपादिके ।
यासज्यते यथार्थेषु, श्रोता सोपाधिवाक् पुनः ॥ ४१ ॥
वञ्चनप्रवणं बोधं, कर्त्ता निकृतिवाक्यतः ।
न नमत्यधिकेष्वात्मा, सा चाप्रणतिवागभूत् ॥ ४२ ॥
या प्रवर्तयति स्तेये, मोषवाक् सा समीरिता ।
सम्यग्मार्गं नियोक्त्री या, सम्यग्दर्शनवागसौ ॥ ४३ ॥
मिथ्यादर्शन वाक् सा या, मिथ्यामार्गोपदेशिनी ।
वाचो द्वादशभेदाया: वक्तारो द्वीन्द्रियादयः ॥ ४४ ॥

## चतुःप्रकारासत्यमाह

मुख्यासत्यं वचः साधो!, चतुर्भेदमपि त्रिधा ।
संयमं विदधानोऽपि, माषादोषेण बाध्यते ॥ ४५ ॥
प्रथमं तद्वचोऽसत्यं, यत् सतः प्रतिषेधनम् ।
अकाले मरणं नास्ति, नराणामिति बद्वचः ॥ ४६ ॥
द्वितीयं तद्वचोऽसत्यं, अभूतोद्भावनं मतं ।
अस्त्यकाले सुराणां च, मृत्युरित्येवमादि यत् ॥ ४७ ॥
तृतीयं तद्वचोऽसत्यं, यदनालोच्य भाषते ।
पदार्थमन्यजातीयं, गौ र्वाजीत्येवमादिकम् ॥ ४८ ॥
सावद्यं गर्हितं वाक्य—मप्रियं च मनीषिभिः ।
त्रिप्रकारमिति प्रोक्तं, तुरीयकमसूनृतम् ॥ ४९ ॥
प्राणिघातादयो दोषाः, प्रवर्तन्ते यतोऽखिलाः ।
सावद्यं तद्वचो ज्ञेयं, षड्विधारम्भवर्णकम् ॥ ५० ॥
कर्कशं निष्ठुरं हास्यं, परुषं पिशुनं वचः ,
ईर्ष्यापरमसंबन्धं, गर्हितं सकलं मतम् ॥ ५१ ॥
अवद्यकारणं वैरं, कलहत्रासवर्धकम् ।
अश्रव्यं कटुकं ज्ञेय—मप्रियं वचनं बुधैः ॥ ५२ ॥
असत्यं सत्यगं किञ्चित्, किञ्चित् सत्यमसत्यगं ।
सत्यसत्यं पुनः किञ्चित्, किञ्चित् मस्यासत्यमेव ॥ ५३ ॥

*अस्येदं तात्पर्यम्* असत्यमपि किञ्चित् सत्यमेव यथा अन्धांसि रन्धयति, वासांसि वयतीति ॥ १ ॥ *सत्यमपि* असत्यं किञ्चिद् यथा अर्धमासतमे दिने तवेदं देयमित्यास्थाय मासतमे संवत्सरतमे वा दिने ददातीति ॥ २ ॥ *सत्यसत्यं* किञ्चिद् यथा यद् वस्तु देशकालाकारप्रमाणप्रतिपन्नं तत्रैवाऽविसवाद इति ॥ ३ ॥ *असत्यासत्यं* किञ्चिद् यथा यद्वस्तु, स्वस्यासत् तत् कल्ये तव दास्यामीति संगिरते ॥ ४ ॥

तुरीयं वर्जयेन् नित्यं, लोकयात्रात्रये स्थितः ।
यहाश्रमी प्रवर्तेत, गुणदोषौ विचारयन् ॥ ५४ ॥
सत्यासत्याप्युभयो, सानुभयी स्याच्चतुर्था वाणी ।
किन्तु तृतीया योग्या, सत्यव्रतधारिणां गृहिणाम् ॥ ५५ ॥
आद्यं तथान्त्यमिति च द्वितीयं जनानां,
क्षेमंकरं भवति तत् किल तीर्थभर्तुः ।
द्वयक्षाविसंभवि च तद् व्यवहार दूरं,
प्रायो मयेत्यमिहितं न विशेषयोगात् ॥ ५६ ॥
यदिदं प्रमादयोगा–दसदभिधानं विधीयते किमपि ।
तदनृतमपि विज्ञेयं, तद्भेदाः सन्ति चत्वारः ॥ ५७ ॥
स्वक्षेत्रकालभावैः, सदपि हि यस्मिन् निषिद्ध्यते वस्तु ।
तत् प्रथममसत्यं स्यात्, नास्ति यथा देवदत्तोऽत्र ॥ ५८ ॥

असदपि हि वस्तुरूपं, यत्र परक्षेत्रकालभावैस्तैः ।
उद्भाव्यते द्वितीयं, तदनृतमस्मिन् यथास्ति घटः ॥ ५९ ॥
वस्तु सदपि स्वरूपात्, पररूपेणाभिधीयते यस्मिन् ।
अनृतमिदं च तृतीयं, विज्ञेयं गौरिति यथाऽश्वः ॥ ६० ॥
गर्हितमवद्यसंयुत,–मप्रियमपि भवति वचनरूपं यत् ।
सामान्येन त्रेधा, मतमिदमनृतं तुरीयं तु ॥ ६१ ॥
पैशुन्यहासगर्भं कर्कशमसमञ्जसं प्रलपितं च ।
अन्यदपि यदुत्सूत्रं, तत्सर्वं गर्हितं गदितम् ॥ ६२ ॥
छेदनभेदनमारण–कर्षण वाणिज्यचौर्यवचनादि ।
तत्सावद्यं यस्मात् प्राणिवधाद्याः प्रवर्तन्ते ॥ ६३ ॥
अरतिकरं भीतिकरं, खेदकरं वैरशोककलहकरं ।
यदपरमपि तापकरं, परस्य तत्सर्वमप्रियं ज्ञेयम् ॥ ६४ ॥

## दशधा दुर्भाषां त्यजेत्

कर्कशा परुषा कट्वी निष्ठुरा परकोपिनी ।
छेद्याङ्कुरा मध्यकृशाऽतिमानिन्यनयङ्करा ॥ ६५ ॥
भूतहिंसाकरी चेति दुर्भाषां दशधा त्यजेत् ।
हितं मितमसंदिग्धं, स्याद् भाषासमितो वदन् ॥ ६६ ॥

१ *कर्कशा*— सन्तापजननी-मूर्खस्त्वं बलिवर्दस्त्वं न किञ्चिज्जनासि त्वमित्यादिका भाषा कर्कशा उच्यते ।

२ *परुषा*— मर्मचालनी-त्वमनेकदोषदुष्टोऽसीति भाषा ।

३ *कटुका*— उद्वेगजननी जातिहीनस्त्वं निर्धर्मस्त्वमिति भाषा ।

४ *निष्ठुरा*— त्वां मारयिष्यामि शिरस्ते कर्तयिष्यामीति भाषा

५ *परकोपिनी*— परेषां कोपोत्पादिका, किं ते तप. प्रहसनशीलो निर्लज्जस्त्वमित्यादिका भाषा ।

६ *छेदङ्करी*— वीर्यशीलगुणानां निर्मूलनाशकारी अथवा असद्भूतदोषोद्भावनी भाषा ।

७ *मध्यकृशा*— ईदृशी निष्ठुरा वाग् या अस्थ्नां मध्यमपि कृष्यति तनूकरोतीत्यर्थः ।

८ *अतिमानिनी*— आत्मनोमहत्त्वख्यापनपरा अन्येषां निन्दापरा

९ *अनयंकरा*— शीलानां खण्डनकरी अन्योऽन्यसङ्गतानां वा विद्वेषकारिणी भाषा ।

१० *भूतहिंसाकरी*— प्राणिनां प्राणवियोगकरी भाषा ।

## असत्यनिन्दामाह

**असत्यमप्रत्ययमूलकारणं, कुवासनासद्म समृद्धिवारणं ।**
**विपन्निदानं परवञ्चनोर्जितं, कृतापराधं कृतिभि र्विवर्जितम्**
**असत्यवादिनः कश्चिद् न विश्वसिति सर्पवत् ।**
**सर्वैर्निन्द्यो मृषावादी, पारदारिकवद् भवेत् ॥ ६८ ॥**

वक्तव्यं वचनं सत्यं, धर्मसंवेगकारणं ।
धर्मिभि धर्मसिद्धयर्थं, नासत्यं धर्मनाशकृत् ॥ ६९ ॥

असत्यवादिनो मृतस्यापि दुर्यशो न विनश्यति सकृदुत्थिता दुष्कीर्ति देवैरपि निवारयितुं न शक्या ।

यत्र कर्कशवचोऽस्ति तं नरं, नाश्रयन्ति सुगुणा यशांस्यथः ।
बन्धुसेवकबुधाः सुताः स्त्रियो, व्याघ्रगेहमिव गोमृगा इह ॥७०॥
वाणीमसभ्यां परदोषगर्भा,—मजायमानातिशयप्रगल्भाम् ।
भाषेत नो किन्त्वभिजातरम्यां, हितां मितां सद्व्यवहारगम्याम्

यशो यस्माद् भस्मीभवति वनवन्हेरिव वनं,
निदानं दुःखानां यदवनिरुहाणां जलमिव ।
न यत्र स्याच्छाया तप इव तपःसंयमकथा ।
कथञ्चित् तन्मिथ्या वचनमभिधत्ते न मतिमान् ॥ ७२ ॥
असत्यमहितं ग्राम्यं, कर्कशं परमर्मभित् ।
श्रीसिद्धान्तविरुद्धं च, वचो ब्रूयात् न मतिमान् ॥ ७३ ॥
असत्यं सर्वथा त्याज्यं, वृद्धवाक्यं च सर्वदा ।
परनिन्दा न कर्तव्या, स्वप्नेनापि च सर्वदा ॥ ७४ ॥

अल्पमपि असत्यवचन महतीं हानिं करोति यथा विपुलदुग्धमध्ये पतिता एकापि विषकणिका इव ।

एकेनासत्यवाक्येन, सत्यं बह्वपि हन्यते ।
सर्वत्र जायते नित्यं, कलङ्कोऽसत्यवाचकः ॥ ७५ ॥
असत्यतो भयं वैर-मकीर्तिमरणं कलिः ।
विषादो मत्सरः शोकः, सर्वेऽसत्यस्य बान्धवाः ॥ ७६ ॥
आयासरसनाच्छेद-सर्वस्वहरणादयः ।
इहासत्येन लभ्यन्ते, परत्र नरकाग्निः ॥ ७७ ॥
कलिलस्याजव्यवहारं, वितथं कथितं किल ।
निष्पापो हि वसुस्तेन, मितेन नरकं गतः ॥ ७८ ॥
मुण्डो जटी शिखी नग्न, श्चीवरी वल्कलो नरः ।
विडम्बनाऽखिला साऽस्य, वितथं भाषते यदि ॥ ७९ ॥
कालकूटं यथान्नस्य, यौवनस्य यथा जरा ।
गुणानां विद्धि सर्वेषां, नाशकं वितथं तथा ॥ ८० ॥
स्वमातुरप्यविश्वास्यो, मृषावादपरायणः ।
शेषाणां किमु लोकानां, न शत्रुरिव जायते ॥ ८१ ॥

## असत्यवचनफलमाह

मूकता मतिवैकल्यं, मूर्खता बोधविच्युतिः ।
बाधिर्यं मुखरोगित्व-मसत्यादेव देहिनाम् ॥ ८२ ॥

विनष्टजिह्वाः परिनिन्द्यवाचः, खरोष्ट्रमार्जार विडालकण्ठाः ।
विवेकशून्या जडमूकभावा, नरा भवन्त्यत्र मृषाभिधानात् ॥
नृणां मूकबधिरत्वं, मुखरोगादिसङ्कुलम् ।
दुःस्वरत्वं च मूर्खत्वं, वाक्येऽनृतभाषणात् ॥ ८४ ॥

चौरस्य चौरोऽयं, अन्धस्यान्धोऽयं, पापिनः पापी अयं, षण्ढस्य षण्ढोऽयं, रण्डाया रण्डेयमित्यादिकं सत्यमपि वचनं क्लेशजनकत्वात् साधुभि र्न वक्तव्यम् ।

कामाग्निदीपिका स्त्रीशृङ्गार कथा,

आहारसंज्ञा प्रवर्धनी इन्द्रियपुष्टिकारिणी अन्नपानकथा, रौद्रकर्मोद्भवा संग्रामपोषिका रौद्रध्यानविधायिनी नृपकथा, चौरदेशद्रव्योपार्जनकुशास्त्रादिका कथा न कर्तव्या न श्रोतव्या, जिनधर्मधरयोगिनां कथां मुक्त्वा अन्यकथा संयमिभिर्जातु न विधेया ।

विकथाकारिणां पुंसां मतिश्रुतज्ञानं नश्येत् महान् पापास्रवो भवेत् ।

तथा वृथा पापास्रवकारिणी स्वात्मदुःखविधायिनी पृष्ठमांसभक्षणोपमा परनिन्दा सत्यवादिभि र्जातु न विधातव्या । एवं निश्चयतो निर्दोषाणां चतुर्विधसंघानां दोषो जातु न वाच्यः, अपकारि कठोर निन्दासूचकं पापोत्पादकं आक्षेपकारि यद् वचनं तत् सत्यमपि असत्यमेवास्ति । यद् वचनं परपीडाकरं, परुषं कर्णकटुकं, दुःखदमनिष्टं च दक्षैः कदापि न वाच्यम् । यया गिराऽन्येषां जन्तूनां

पीडा [illegible] जायते स्वात्मा च [illegible] सा न पौर्विकभिर्न याच्या । मृषावादोत्थपापेन नृणां मूर्खता जायते । प्रज्ञा बुद्धि हीयते । जगत्त्रयेऽकीर्तिः स्यात्, लोके गूथभक्षणं तथा विषभक्षणं वरं किन्तु धर्मविरोधि अशुभाकरमसत्यभाषणं वरं न । चिरप्रव्रजितः साधु बहुश्रुतो तपोविभूषितोऽपि सन् यदि मृषावचनं वदति तदा तु मद्यपादपि निन्द्यः स्यात् । महाभारतान्तर्गत गृध्रगोमायु दृष्टान्तमाह—लोकान् प्रति गृध्रको प्राह–

अलं स्थित्वा श्मशानेऽस्मिन्, गृध्रगोमायुसंकुले ।
कङ्कालबहुले घोरे, सर्वप्राणिभयङ्करे ॥ ॥ ८५ ॥
न चेह जीवितः कश्चित्, कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः, प्राणिनां गतिरीदृशी ॥ ८६ ॥

तदनु शृगालो लोकान् प्रत्याह

आदित्योऽयं स्थितो मूढाः!, स्नेहं कुरुत साम्प्रतं,
बहुविघ्नो मुहूर्तोऽयं, जीवेदपि कदाचन ॥ ८७ ॥
अमुं कनकवर्णाभं, बालमप्राप्तयौवनम् ।
गृध्रवाक्यात् कथं मूढाः, त्यजध्वमविशङ्किताः ॥ ८८ ॥

सत्यवचनमाहात्म्याद् धनदेवो राजपूज्यो जातः तत्कथानकं वक्ष्ये

जम्बूद्वीपे जनाकीर्णे, विदेहे पूर्वनामनि ।
पुष्कलावती देशे, जैनधर्माकरे वरे ॥ १ ॥

नगर्यां पुण्डरीकिण्यां, धनदेवो वणिग्भवेत् ।
सत्यवाक्यपरस्तस्य, जिनदेवोऽतिदुष्टधीः ॥ २ ॥
अर्धमर्धं स्वलाभस्य, गृहीष्यावो धनादिकं ।
निःसाक्षिकां व्यवस्थामेतौ कृत्वा देशान्तरं गतौ ॥ ३ ॥
उपार्ज्य बहुशो द्रव्यं, पुण्यकर्मोदयादुभौ ।
व्याघुट्य कुशलेनैव, स्वगृहं प्रापतुश्चिरात् ॥ ४ ॥
जिनदेवोऽत्र लाभार्धं, न दत्ते दुष्टमानसः ।
स्तोकं स्वं धनदेवाय, चौचित्येन ददाति यं ॥ ५ ॥
ततो जातश्च कलह,—स्तयो स्तत्र परस्परं ।
मूढा द्रव्यार्थमेवाहो, पापं कुर्वन्ति किं न हि ॥ ६ ॥
निःसाक्षिकबलाद् ब्रूते, जिनदेवोऽतिपापधीः ।
लोकस्वजनराजादी-नामसत्यं वचो हठात् ॥ ७ ॥
मया नैवास्य लाभार्धं, सद्द्रव्यं भणितं तदा ।
उक्तं स्वौचितं तस्माद् ग्राह्यिकं प्रयच्छाम्यहं ॥ ८ ॥
धनदेवो नृपादीनां, स्वजनानां पुरःस्थितः ।
वदत्येव स्फुटं सत्यं, सत्यव्रतप्रतिष्ठितः ॥ ९ ॥
ततो राज्ञा धनमर्धं, दिव्यं वह्निसमुद्भवं ।
धनदेवोऽतिशुद्धोऽभूदग्ने नैवेतरोऽनृतात् ॥ १० ॥

धतो हि धनदेवस्य, धनं सर्वं समर्पितं ।
राज्ञानु पूजितः साधु, कारितो भूतले सुधात् ॥ ११ ॥
तथा सर्वजनै र्लोकैः, संस्तुतोऽर्चितो मुदः ।
धनदेवोऽभवति विख्यातो, जातः सत्यप्रभावतः ॥ १२ ॥

इति धनदेवेन सत्यव्रतफलं प्राप्तं, अतएव भो बुधाः ! नित्यं सत्य-धर्मम् पालयत । तथा चोक्तम्

सत्यवादीह चामुत्र, मोदते धनदेववत्,
मृषावादी सधिक्कारं, यात्यधो वसुराजवत् ॥

वक्ति व्यक्तं सत्यमुच्चै र्जनो यः,
स्वर्गस्त्रीणां भूरिभोगैकभाक् स्यात् ।
अस्मिन् पूज्यः सर्वदा सर्वसद्भिः,
सत्यात् सत्यं चान्यदस्ति व्रतं किम् ॥६०॥

नरकगृहकपाटं, नाकमोक्षैकमित्रं,
जिनगणधरसेव्यं, सर्वविद्याकरं भोः ।
स्वपरहितनबोधं, जीवहिंसाविदूरं,
त्वमपि वद सुसारं सत्यवाक्यं सुखाय । ॥६१॥

स्वयमेव सामायान्ति सम्पदः सत्यवादिनां,
किं चित्रं यद् वराऽऽयान्ति, हंसः पद्माकरं वनम्,

बुधजनपरिसेव्यं, स्वर्गमोक्षैकद्वारं,
सकलसुखनिधानं, धर्मबीजं गुणाढ्यं ।
जिनवचन पवित्रं, सर्वपापापहारं,
शिवसुखमतिसारं, त्वं वचो ब्रूहि सत्यम् ॥९१॥
सत्यं शर्मशतप्रदं शुभकरं, सत्यं सुकीर्तिप्रदं,
सत्यं जीवदयाद्रुमोघविलसत्पानीयमाहु र्बुधाः ।
सत्यं सर्वजनप्रतीतिजनकं सत्यं सतो मण्डनं ।
सत्यं निर्मलसम्पदासुखकरं सत्यं श्रयन्तूत्तमाः ॥९२॥
यः सुधीः स्वर्गमुक्त्यर्थं, व्रतं सत्यप्रतिष्ठितं ।
धत्ते स पूज्यतां याति, चेहैव नृसुरासुरैः ॥९३॥
ज्ञानं विद्यां विवेकं च, सुस्वरत्वं वचः पटुम् ।
वाग्मित्वं सुकवित्वं च, सत्याद् जीवा भवन्त्यहो
ॐ ह्रीं उत्तमसत्यधर्माङ्गाय नमः ।
असत्यदूरगं सत्यं, वाचा सर्वहितावहं ।
पूजया परया भक्त्या, पूजयामि सर्वाप्तये ॥
ॐ ह्रीं परमब्रह्मणे उत्तमसत्यधर्माङ्गाय नमः
अनर्घ्यपदप्राप्तये अर्घ्यं निर्वपामीति स्वाहा

# उत्तमसंयमधर्मः

## मङ्गलाचरणम्

भावाभावस्वरूपं सकलमसकलं द्रव्यपर्यायतत्त्वं,
भेदाभेदावलीढं त्रिभुवनभुवनाभ्यन्तरे वर्तमानम् ।
लोकालोकावलोकी गतनिखिलमलं लोकते यस्य बोधः,
तं देवं मुक्तिकामा भवभयनभिदे भावयन्त्वाप्तमत्र ॥१॥
यो निःश्रेयसशर्मदानकुशलं, संत्यज्य रत्नत्रयं ।
भीमं दुर्गमवेदनोदयकरं, भोगं मिथः सेवते ।
मन्ये प्राणविपर्ययादिजनकं, हालाहलं वल्भते,
सद्यो जन्मजरान्तकक्षयकरं, पीयूषमत्यस्य सः ॥२॥

## संयमलक्षणम्

कषायेन्द्रियदण्डानां, विजयो व्रतधारणं ।
संयमः संयतैः प्रोक्तः, श्रेयः श्रयितुमिच्छताम् ॥३॥
व्रतदण्डकषायाक्ष-समितीनां यथाक्रमम् ।
संयमो धारणं त्यागो, निग्रहो विजयोऽवनम् ॥४॥
वदसमिदिकसायाणं, दंडाण तहिंदियाण पंचण्हं ।
धारणपालणणिग्गह, चागजओ संजमो भणियो ॥५॥

त्रियोगशुद्धिपूर्वकं द्विविधपरिग्रहाणां त्यागः संयमः कथ्यते ।

१ *संयमः*— स सम्यक् पापक्रियाभ्यो यम उपरमः संयमः । *पापक्रिया*— अशुभमनोवाक्काययोगा. पापक्रियाः स समन्तात् मनोवाक्कायपापादाननिमित्तक्रियाभ्यो यममुपरम· संयमः । त्रयोदशात्मके चारित्रे सर्वदा सर्वथा च प्रयत्न सयमः । प्राणीन्द्रियेषु अशुभप्रवृते विरमण संयम· ।

२ प्राणिरक्षणेन्द्रियजयलक्षणः संयम· । तत्र प्राणिसयम· सप्तदशविधः पृथ्वीअप्तेजोमरुत्कायानां तथा वनस्पतिकायानां यत्नेन यद् रक्षणं स पञ्चधा कायसयमः । द्वित्रिचतुः पञ्चेन्द्रियाणां यत् प्रतिपालनं स चतुर्धा त्रससंयम । अजीवानां तृणादीनां नखादिभिर्यद् अछेदनं स अजीवसयम । ज्ञानोपकरणादीन् नेत्राभ्यां वीक्ष्य तत्प्रतिलेखनम् । धर्मोपकरणाणां प्रमादमन्तरेण दुष्प्रमार्जनवर्जनम् । नित्योपयोग्युपकरणादिक व्यवस्थाप्य प्रतिदिनं विलोकनं, तत्र सम्मूर्च्छनजीवानामुत्पत्तिसभवात् । द्वीन्द्रियादिजीवानामपसार्य अन्यत्राक्षेपणम् तेषा तत्रैव रक्षणम् । मनवचनकायानां स्ववशविधान त्रिविधसंयमः । चतुर्दशविधजीवसमासान् यत्नतो रक्षन्ते सोऽपि प्राणिसंयमः ।

## प्रकारान्तरेण सप्तदश संयमान् प्राह

**पंचासवेहि विरमणं, पंचिंदिय णिग्गहो कसायजओ य,**
**तिहिं दंडहि य विरदो, सत्तारस संजमा भणिया ॥**

स्वामिन् ! पृच्छ वनद्विपान् नियमितान्, मत्स्याकुलिन्या झषीः,
घ्राणाधीश ! विदन्त्यमी रविकरा, प्रायः प्रभो! चक्षुः सखा।
किं दूरेऽधिपते ! क्व पक्वणभुवां दोःस्थित्वमित्येकशः,
प्रत्युक्तप्रभुशक्ति वैरिविजयव्यापन् निरुन्ध्यान् मनः ॥१२॥

टीका-तत्र तावत् स्पर्शनेन्द्रियं मनः प्रति स्वसामर्थ्यं प्रकाशयति । हे स्वामिन् ! पृच्छ अनुयुङ्क्ष्व त्वं, कान् वनद्विपान् आरण्यहस्तिनः। किंविशिष्टान् ? नियमितान् स्तम्भेषु बद्धान् । कुलीनानां हि स्वावदानविकत्थनं अपाये स्यात् । अत्र हस्तिनीस्पर्शदोषो दर्शितः अथ रसनेन्द्रियं वक्ति-हे नाथ ! पश्य अवलोकय त्वं झषी मत्स्य पत्नीः किं विशिष्टा ? अश्रुपिल्ला बाष्पजलै क्लिन्ननेत्राः । किमत्र मे स्वोत्कृष्टत्वकथनेन अत्र बडिशस्थमांसास्वादनलम्पटपति मरणदुःख प्रकटितं ॥२॥

घ्राणेन्द्रियं प्राह हे घ्राणेश ! विदन्ति जानन्ति, ? अमी एते रविकराः सूर्यरश्मयः कथ ? प्रायः बाहुल्येन । किमत्र मे स्वकृत्यकथनेन कमलकोशे गन्धलुब्धभ्रमरमरणं व्यक्तीकृतं ॥३॥

अथ चक्षुरिन्द्रियमाचष्टे- हे प्रभो ! किं किं वर्तते । कोऽसौ ? अग्नेः सखा वायुः । क्व दूरे विप्रकृष्टे यद्यहं अस्मि वायुरेव मध्यस्थं प्रष्टव्यं । तस्य सदा सर्वगतत्वेन मत्पुरुषाकारे साक्षित्वात् । अत्र रूपावलोकनोत्सुकपतङ्गमरणं व्यञ्जितं ॥४॥

अथ श्रोत्रेन्द्रियं वदति-हे अधिपते ! क्व कस्मिन् देशे विद्यते, किं तत् दोःस्थित्वं कृच्छ्रजीवनं केषां ! पक्वणभुवां पक्वणेष

शंकराद्येषु पञ्चवगमुवः स्वरास्तेषां, सर्वेऽ स्वराः मुखवीणिका अद् दृश्यन्ते कस्यानुभावः इति भावः । अत्र गीतध्वनिस्रुम मृदङ्गः प्रकाशितः ॥५॥

जितेन्द्रियलक्षणमाह

इन्द्रियाणां प्रवृत्तौ च, निवृत्तौ च मनः प्रभुः ।
मन एव जयेत् तस्मात् जिते तस्मिन् जितेन्द्रियः ॥१४॥

इन्द्रियविषयानाह

पंच रस पंच वण्णा, दो गंधा अट्ठ फास सत्त सरा ।
मणसहिद अट्ठवीसा, इन्द्रियविसया मुणेयव्वा ॥१५॥

सप्तस्वरान् व्याचष्टे

निषादर्षभगान्धार, षड्जमध्यमं धैवतः ।
पञ्चमश्चैव सप्तेति, तन्त्री कण्ठोत्थिताः स्वराः ॥१६॥

सप्तस्वराणां स्वामिनः प्राह

निषादं कुञ्जरो वक्ति, ब्रूते गौ ऋषभं तथा ।
अजा वदति गान्धारं, षड्जं ब्रूते भुजङ्गभुक् ॥१७॥
रौति मध्यमं क्रौञ्चो, धैवतं च तुरङ्गमः ।
पुष्पसंधारणा काले, पिकः कूजति पञ्चमम् ॥१८॥

सप्तस्वराणामुत्पत्तिस्थानानि प्राह

कण्ठदेशे स्थितः षड्जः, शिरःस्थः ऋषभस्तथा ।

नासिकायां च गान्धारो, हृदये मध्यमो भवेत् ॥१९॥
पञ्चमश्च मुखे ज्ञेयस्तालुदेशे तु धैवतः ।
निषादः सर्वगात्रे च, ज्ञेयाः सप्त स्वरा इति ॥२०॥
एकैककरणपरवशमपि, मृत्युर्याति जन्तुजातमिदं ।
सकलाक्षविषयलोलः, कथमिह कुशली जनोऽज्ञः स्यात् ॥
स्वस्वविषयेषु व्रजतां पञ्चाक्षाणां प्रतार्थं यद् दमनं स पञ्चेन्द्रियसंयमः । लोके स्वेच्छया गच्छतो मनसो ध्यानाध्ययनकर्मभि र्यन्निरोधनं स मनःसंयमः ।
मनोगजं वशं याति, संयमाङ्कुशताडनात् ।
भ्रमन् स विषयारण्ये, उन्मूलयन् धर्मद्रुमान् ॥२२॥
अवार्यविक्रमः सोऽयं, चित्तदन्ती निवार्यतां ।
न यावद् हिनस्त्येव, सत्संयमनिकेतनम् ॥२३
किं न स्पृष्टं न किं दृष्टं, किं घ्रातं न किं श्रुतं ।
मुहुरास्वादितं किं न, भवे दासेन कर्मणाम् ॥२४॥
मनोजयोपायमाह
संचिन्तयन्ननुप्रेक्षाः, स्वाध्याये नित्यमुद्यतः ।
जयत्येव मनः साधु-रिन्द्रियार्थपराङ्मुखः ॥२५॥
समाधिषु कृताभ्यासो, निःसङ्गो निर्ममो मुनिः ।
रागादिक्लेशनिर्मुक्तं, करोति स्ववशं मनः ॥२६॥

क्षान्तियोषिति यः सक्तः, सम्यग्ज्ञानातिथिप्रियः ।
स गृहस्थो भवेत् नूनं, मनोमर्कटसाधकः ॥२६॥

पञ्चेन्द्रियविषयासक्तिफलमाह

गोपासक्ता सुतं हत्वा, नासिक्यनगरे मृता ।
पापा गृहपतेर्भार्या, दुहिता मारिता सती ॥२७॥
मत्स्यमांसरसासक्तः, काम्पिल्यनगराधिपः ।
राजभ्रष्टो मृतःप्राप्तो, भीमः श्वभ्रमुकव्यथम् ॥२८॥
सरव्यां गन्धमित्राख्यो, घ्राणेन्द्रियवशं गतः ।
विषप्रसूनमाघ्राय, विपद्य नरकं गतः ॥२९॥
सुवेगस्तस्करो दीनो, रामारूपविसक्तधीः ।
बाणविद्धेक्षणो मृत्वा, प्रपेदे नारकीं पुरीं ॥३०॥
मूर्च्छिता पाटलीपुत्रे भव्यपञ्चालगीततः ।
मृता गन्धर्वदत्तापि प्रासादात् पतिता सती ॥३१॥
एकैकमक्षविषयं भजतामभीषां,
संपद्यते यदि कृतान्तगृहातिथित्वं ।
पञ्चाक्षगोचरगतस्य किमस्ति वाच्यं,
ह्यक्षार्थमित्यमलधीरधियस्त्यजन्ति ॥३२॥

प्राणिसंयमः

षड्भिः समितयः पञ्च, यत्र संवरमातृकाः ।
यत्नेन प्रतिपाल्यन्ते, ऽपहृताख्यः स संयमः ॥३३॥

संयमः स जिनैःप्रोक्तः, साक्षान्मुक्तिनिबन्धनः ।
तपो दृग्ज्ञानधर्मादि,–गुणानां शुद्धिकारकः ॥३४॥

उपेक्षापहृताभ्यां स, संयमो द्विविधः मतः ।
आद्य उत्कृष्टकायानां, द्वितीयोऽपरयोगिनां ॥३५॥

उत्कृष्टाङ्गबलाख्यस्य, विविक्तत्रिगुप्तिधारिणः ।
रागद्वेषाद्यभावो यः, उपेक्षासंयमोऽत्र सः ॥३६॥

*तत्रापहृतप्राणिसंयमस्त्रिविधः* :—तद्यथा प्रासुकवसति भोजना-दिमात्रबाह्यसाधनस्य, स्वाधीनज्ञानादिकस्य मुनेर्जन्तूपनिपाते सति ततः स्थानात् अपहृत्य जीवान् पालयतः उत्कृष्टापहृत प्राणिसंयमो भवति । मृदुना मयूरपिच्छेण प्रमृज्य जीवान् परिहरतो मध्यमः प्राणिसंयमो भवति । उपकरणान्तरेण प्रमृज्य परिहरतो निकृष्टप्राणिसंयमो जायते ।

*उपेक्षासंयमः*.–देशकालविधानज्ञस्य परेषामनुरोधेन व्युत्सृष्टका-यस्य त्रिगुप्तिगुप्तस्य मुनेः रागद्वेषयोरनभिष्वङ्गः उपेक्षासंयमः ।

तावदेव पुरुषः सचेतनः, तावदाकलयति क्षमां सदा ।
तावदुद्वहति मानमुत्तमं, यावदिन्द्रियवशं न गच्छति ॥३७॥

योऽविचारितरम्येषु, क्षणं देहार्तिहारिषु ।
इन्द्रियार्थेषु वश्यात्मा, सोऽपि योगी किलोच्यते ॥३८॥
विषयोरगदष्टस्य, कषायविषमोहिनः ।
संयमो हि महामन्त्रः, त्राता सर्वत्र देहिनाम् ॥३९॥
वर्धते गृद्धिरश्रान्तं, सन्तोषश्चापसर्पति ।
विवेको विलयं याति, विषयैर्वञ्चितात्मनाम् ॥४०॥
अविचारितरम्याणि, शासनान्यसतां जनैः ।
अधमान्यपि सेव्यन्ते. जिह्वोपस्थादिदण्डितैः ॥४१॥
विषयेषु यथा चित्तं, जन्तो र्मज्जनमनाकुलं ।
तथा यद्यात्मनस्तत्त्वे, सद्यः को न शिवीभवेत् ॥४२॥
अपथो कथितः पन्था, इन्द्रियाणामसंयमः ।
तज्जयः सम्पदां मार्गो, येनेष्टं तेन गम्यताम् ॥४३॥
संकुचत्यक्षसैन्यं यः, कूर्मोऽङ्गानीव संयमी ।
स लोके दोषपङ्काढ्ये, चरन्नपि न लिप्यते ॥४४॥
यथा यथा हृषीकाणि, स्ववशं यान्ति देहिनां ।
तथा तथा स्फुरत्युच्चैं हृदि विज्ञानभास्करः ॥४५॥
जेतुं जन्मशतेनापि रागाद्यरिपताकिनी ।

शिवं दूरं भवेन्नात्र, जिताक्षस्य स्वसंविदः ।
नरनागसुरेन्द्राणां, पदं जीर्णतृणं यथा ॥५४॥
निरुध्य बोधपाशेन, क्षिप्ता वैराग्यपञ्जरे ।
हृषीकहरयो येन, स मुनिना महेश्वरः ॥५५॥

दन्तीन्द्रदन्तदलनैकविधौ समर्थाः,
सन्त्यत्र [illegible]मृगराजवधे प्रवीणाः ।
आशीविषस्य च दशीकरणेऽपि दक्षाः,
पञ्चाक्षनिर्जयपरास्तु न सन्ति मर्त्याः ॥५६॥

कः [illegible]ष्विषु चयां धत्ते, संकोचयति यो मनः ।
विकारेन्द्रियनिर्मुक्तः, संयमस्तस्य संभवेत् ॥५७॥
ऋते नृत्वं न कुत्रापि, संयमो देहिनां भवेत् ।
मत्वेत्येकाऽपि कालस्य, कला नेया न तं विना ॥५८॥
यथौषधक्रिया रिक्ता, रोगिणोऽपथ्यसेविनः ।
क्रोधनस्य तथा रिक्ताः, समाविभूतसंयमाः ॥५९॥
मानदावाग्निदग्धेषु, मदोपरकषायिषु ।
नृद्रुमेषु प्ररोहन्ति, न सच्छायोचिताङ्कुराः ॥६०॥
यावन्मायानिशा लेशोऽप्यात्माम्बुषु कृतास्पदः ।
न प्रबोधश्रियं तावद् धत्ते चित्ताम्बुजाकरः ॥६१॥

लोभक्रोधसच्छिद्राणि, चेतः स्रोतांसि दूरतः ।
गुणाढ्यन्यास्यमन्तीह, बालपल्लसरसीमिव ॥६१॥
तस्मान्न मनोनिकेतेऽस्मिन्, इदं शल्यचतुष्टयम् ।
यतेतोद्धर्तुमात्मज्ञः, क्षेमाय शमकीलकैः ॥६२॥
यदस्वर्थेषु विसर्पन्ति, स्वभावादिन्द्रियाणि षट् ।
तत्स्वरूपपरिज्ञानात्, प्रत्यावर्तेत सर्वथा ॥६३॥
आपाते सुन्दरारम्भे, विपाके विरसाश्रये ।
विषं वा विषयैर्ग्रस्ते, कुतः कुशलमात्मनि ॥६४॥
दुश्चिन्तनं दुरालापं, दुर्व्यापारं च नाचरेत् ।
व्रती व्रतविशुद्ध्यर्थम्, मनोवाक्कायसंश्रयम् ॥६५॥

संयमभेदान् प्राह

वृत्तं सामायिकं ज्ञेयं, छेदोपस्थापनं तथा ।
परिहारं च सूक्ष्मं च, यथाख्यातं च पञ्चमं ॥६६॥
आद्यं सामायिकं प्राहु, यथाविधि द्विविधं पुनः
कालेनानियतेनैकं, नियतेनान्यत् संयुतम् । ॥६७॥
प्रत्याख्यानप्रभेदेन, सर्वसावद्यकर्मणः ।
नित्यं नियतकालं वा, वृत्तं सामायिकं स्मृतम्
छेदोपस्थापनं नाम, चारित्रमिति कथ्यते ।

निवृत्तिः प्रविभागेन, विच्छेदे वा प्रतिक्रिया ॥६९॥
यत्र हिंसाविभेदेन, सर्वसावद्यकर्मणः ।
ततोऽपि विशुद्धि र्वा, छेदोपस्थापनं हि तत् ॥७०॥
शुद्धि भवति चारित्रं, परिहारविशुद्धिः तत् ।
विशिष्टपरिहारेण, प्राणिघातस्य यत्र हि ॥७१॥
"परिहार विशुद्धाख्यं, परिहारविशुद्धितः"
कषायेषु प्रशान्तेषु, प्रक्षीणेष्वखिलेषु वा ।
स्यात् सूक्ष्मसाम्परायाख्यं, सूक्ष्मलोभवतो यतेः ॥७२॥
चारित्रमोहनीयस्य, क्षयेनोपशमेन च ।
याथात्म्यसमवस्थानं, यथाख्यातं प्रचक्ष्यते ॥७३॥

तपसः परिकरः संयमः, उपवासविजृम्भणेन, अवमौदर्यकरणेन, रसपरिहारेण, व्रतपरिसंख्याधारणेन ध्यानाध्ययनार्थम् निर्जन प्रदेशे शयनासनविधानेन, गुरुकायक्लेशकरणेन, संयमो भवति । पञ्चेन्द्रियवशीकरणेन, त्रसस्थावरजीवरक्षणेन, मनःप्रसरस्तम्भनेन, बहुगमनागमनत्यजनेन, सूत्रार्थविचारणेन, [illegible], कषायदमनेन, आत्मगुणचिन्तनेन, गृहीतयमनियम परिपालनेन संयमो भवति । जीवो भवार्णवे परिभ्रमति संयमं विना नरभवो विफलं च समस्ति । समस्तजीवानामिहभवे परभवे च संयम एवं शरणं ।

आत्मस्वरूपमाह

सद्द्रव्यमस्मि चिदहं, ज्ञाता दृष्टा सदाऽप्युदासीनः ।
स्वोपात्तदेहमात्र स्ततः पृथग् गगनवदमूर्तः ॥७८॥

शल्यत्रयं परित्यज्य, निःशल्ये परमात्मनि ।
स्थित्वा विद्वान् सदा शुद्ध,-मात्मानं भावयेत् स्फुटम्

प्रत्याहृत्य विषयेभ्योऽहं, मां मयैव मयि स्थितं ।
बोधात्मानं प्रपन्नोऽस्मि, परमानन्दनिर्वृतम् ॥८०॥

अन्तरात्मानः परमाभिजातत्वमिमानमुद्घोषयन् उपालम्भगर्भाम् शिक्षां प्रयच्छन्नाह

दुग्धो यद्यन्तरात्मन् ! असि खलु परम-ब्रह्मणस्तत्किमक्षैः
लौल्याद्यद्वल् ललान्ताद्, रसमलिनि रसान्, रक्तपाभिर्वणाद्वा
पायं पायं यथाहृदं, विषयमलमयं-रेमि रुग्णाविमानं,
भुञ्जानो व्याप्तराग-रतिमुख भिन्नकं, हंस्यमा स्वं सचित्ता ॥
ततदृग्गोचरसुखये निजसुख, प्रेक्षोऽप्यनूनोन्द्रिया-
व्यासेतु म्रियसे ऽभिमानघन भो-स्वेतः कथाऽविजय ।
पुर्या विश्वचरी कुलिन्नाकिमिमकं, रङ्कुस्तवाशा ततो,
विश्वंश्वयंचणो सजत् सवितरि, स्वे यौवराज्यं मम

विषयाणामास्वादनक्षणरामणीयकानन्तरात्यन्तकटुकास्वादत्वंप्राह

सुधागर्वं खर्वन्त्यभिमुखहृषीकप्रणयिनः,
क्षणं ये तेऽप्यूर्ध्वं विषमपवदन्त्यङ्ग ! विषयाः।
त एवाविर्भूय प्रतिक्षितबमाख्याः खलु तिरो ।
भवन्त्यन्धास्तेभ्योऽप्यहह किमु कर्षन्ति विपदः ॥८३॥

विषयाणामिहामुत्र चात्यन्तं चैतन्याभिभवनिबन्धनत्वमभिधत्ते

किमपीदं विषयमयं, विषमतिविषमं पुमानयं येन
प्रसभमभिभूयमानो, भवे भवे नैव चेतयते ॥८४॥

इन्द्रियविषयपरिहारलक्षणमपहृतसंयमं निरूपितम्

इदानी मध्यमजघन्येन्द्रियविषयापहृतसंयमं कथयति-

साम्यायाक्षजयं प्रतिश्रुतवतो मेऽमी तदर्थाः सुखं,
लिप्सोर्दुःखविभीलुकस्य सुचिराभ्यस्ता रतिद्वेषयोः ।
व्युत्थानाय खलु स्युरित्यखिलशस्तानुत्सजेद् दूरतः ।
तद्विच्छेदननिर्भयानथ भजेत्, साधून् परार्थोद्यतान् ॥८५॥

स्वयं विषयदूरीकरणलक्षण मध्यममपहृतसंयमं प्रति उद्यमयति

मोहाज् जगत्युपेक्ष्येऽपि, छेत्तुमिष्टेतराशयं ।
तथाऽभ्यस्तार्थमुज्झित्वा, तदभावं पदं भजेत् ॥८६॥

अथजघन्येन्द्रियसंयम प्राह

चित्तविक्षेपिणोऽक्षार्थान्, विक्षिपन् द्रव्यभावतः ।
विध्याराद् सोऽर्थिनानर्थ्यं, संवृत्तात्मा विमदेराद् ॥८७॥

अथोत्तममध्यमाधमभेदात् त्रिप्राकारं प्राणिपरिहाररूपमपहृतसंयमं प्रतिपादयति—

बाह्यं साधनमाश्रितो ऽसुवलयं न्नादिमात्रं स्वसाद्,
भूतानामनुसल्लम्नुपसृतान् जन्तून् यतिः पालयन्
स्वं व्यावर्त्य ततः सतां नमसितः स्यात् तानुपायेन तु,
स्वाद् मार्जन् मृदुना प्रियः प्रतिलिखन् नप्याहृतस्तादृशा

उपेक्षासंयमपरिणतं लक्षयति

तेऽमी मत्सुहृदः पुराणपुरुषा मत्कर्मकक्षोदयैः,
स्वैः स्वैः कर्मभिरीरितास्तनुमिमां मन्नेतृकां मद्धिया ।
बञ्चन्त्यन्त इमं न मामिति तदाबाधे त्रिगुप्तः परां,
क्लिष्टोऽप्युत्सृष्टवपुर्य्यः समतया तिष्ठत्युपेक्षायमी ॥८९॥

अथोपेक्षासंयमसिद्ध्यङ्गे तपोरूपे धर्मेऽनुष्ठातॄन् उत्साहयन्नाह

1 उपेक्षासंयमं मोक्ष—लक्ष्मीश्लेषविचक्षणम् ।
लभन्ते यमिनो येन, तच्चरन्तु परं तपः ॥९०॥

अपहृतसंयमस्फारीकरणाय शुद्ध्यष्टकमुपदिशति

भिक्षेर्याशयनासनविनयव्युत्सर्गवाङ्मनस्तनुषु ।
तन्वन्नष्टसु शुद्धिं यतिरपहृतसंयमं प्रथयेत् ॥९१॥
मनोवाक्कायभिक्षेर्योत्सर्गे शयनासने ।
विनये च यतेः शुद्धिः शुद्ध्यष्टकमुदाहृतम् ॥९२॥

*भावशुद्धिः* (*भावशुद्धि*)—कर्मक्षयोपशमजनितामोक्षमार्गरुच्याहितप्रसादा, रागाद्युपप्लवरहिता, तस्यां सत्यां आचारः प्रकाशते, परिशुद्धभित्तिगतचित्रकर्मवत् ॥१॥

*वाक्शुद्धिः*—पृथ्वीकायिकाद्यारम्भप्रेरणारहिता युद्धकामकर्कशसंभिन्नालापपैशुन्यपरुषनिष्ठुरारादिपरपीड़ाकर, प्रयोगनिरुत्सुका, स्त्रीभक्तराष्ट्रावनिपालाश्रितकथाविमुखा, व्रतशीलदेशनादिप्रदानफला, स्वपरहितमितमधुरमनोहरा, परमवैराग्यहेतुभूता, परिहृतपरात्मनिन्दाप्रशंसा, संयतस्य योग्या तदधिष्ठाना:सर्वसम्पद इति ॥२॥

*कायशुद्धिः*—निरावरणाभरणा, निरस्तसंस्कारा, यथाजातमलधारिणी, निराकृताङ्गविकारा, सर्वत्र प्रयत्नवृत्तिः प्रशममूर्तिमिव प्रदर्शयन्ती; तस्यां सत्यां न स्वतोऽन्यस्य भयमुपजायते नाप्यन्यतः स्वस्य ॥३॥

*भिक्षाशुद्धीः*—परीक्षितोभयप्रचारा, प्रमृष्टपूर्वापरस्वाङ्गदेशविधाना, आचारसूत्रोक्तकालदेशप्रकृतिप्रतिपत्तिकुशला, लाभालाभमानापमानसामनमनोवृत्तिः, गीतनृत्यवाद्योपजीविप्रसूतिकामृतकसुरापण्याङ्गनापापकर्मदीनानाथदानशाला यजनविवाहादिकमङ्गलगेहपरिवर्जनपरा, चन्द्रमतिरिव हीनादिकगृहाविशिष्टोपस्थापना लोकगर्हितकुलपरिवर्जनोपलक्षिता दीनवृत्तिविषमा, प्रासुकाहारगवेषणसावधाना, आगमविहितनिरवद्याशनपरिप्राप्तप्राणयात्राफला, तत्प्रतिबद्धा हि चरणसम्पद् गुणसंपदिव साधुजनसेवा-

निबन्धना, सा भिक्षा लाभालाभयो सरसविरसयोश्च सम-सन्तोषवर्द्धि, भिक्षेति भाष्यते ।

भिक्षाशुद्धिपरस्य मुनेरशन पञ्चविधं भवति । तथाचोक्तम्

**गोचरी भ्रामरी दाह–प्रशमनाक्षम्रक्षवत् ।**

**गर्तपूरणवद् भुङ्क्ते, यत्तत् पात्रं प्रशस्यते ॥९३॥**

गोचराक्षम्रक्षणोदराग्निप्रशमनभ्रमराहारश्वभ्रपूरणनामभेदेन । यथा सलीलसालंकारवरयुवतिभिरुपनीयमाने घासे गौर्न तदङ्गतत्सौन्दर्यानिरीक्षणपरस्तृणमेवात्ति, यद्वा तृणलवं नानादेशस्थ यथालाभमभ्यवहरति, न योजनास्पदमपेक्षते, तथा भिक्षुरपि भिक्षापरिवेषकजनमृदुललिततनुरूपवेषाभिलाषविलोकननिरुत्सुक, शुष्कद्रवाहारयोजनविशेषमनवेक्षमाणो यथागतमश्नातीति गौरिव चारो गोचार इति कथ्यते । तथा गवेषणेति च ।१। यथा शकटीं रत्नभारपूर्णां येन केनचित्स्नेहेन अक्षलेप कृत्वा अभिलषितदेशान्तर वणिग् नयति, तथा मुनिरपि गुणरत्नभरितां तनुशकटीम् अनवद्यभिक्षायुरक्षम्रक्षणेनाभिप्रेतसमाधिपत्तनं प्रापयतीति अक्षम्रक्षणनाम प्रसिद्धम् ॥२॥ यथा भाण्डागारे समुत्थित वैश्वानरं अशुचिना शुचिना वा पानीयेन प्रशमयति गृही, तथा यथालब्धेन यतिराप्युदराग्निं सरसेन विरसेन वाऽऽहारेण प्रशमयतीत्युदराग्निप्रशमनमिति च निरूच्यते ॥३। दातृजनबाधया विना कुशलो मुनिर्भ्रमरवदाहरतीतिभ्रमराहारः इत्यपि परिभाष्यते ।४। येन केनचित् कचारेण श्वभ्रपूरणवदुदरगर्तमनगारः पूरयति ।

स्वादुना निःस्वादुना वाऽऽहारेणोदरगर्तपूरणमिति श्वभ्रपूरणं च विधीयते ।२।

ईर्यापथशुद्धिः —नानाविधजीवस्थानानां योनीनामाश्रयाणा-मवबोधात् जनितप्रयत्नपरिहृतजन्तुपीडा ज्ञानादित्यस्वेन्द्रियप्रका-शनिरीक्षितदेशगामिनो द्रुतविलम्बितसम्भ्रान्तविस्मितलीला-विकारदिगवलोकनादिदोषविरहितगमना, तस्यां सत्यां संयमः प्रतिष्ठितो भवति विभव इव सुनीतौ ।

व्युत्सर्गशुद्धिः (प्रतिष्ठापनशुद्धिः) —प्रतिष्ठापनशुद्धिपरः संयतो नखरोमसिंघाणकश्लेष्मनिष्ठीवनशुक्रमलमूत्रत्यजने देहपरित्यागे च ज्ञातप्रदेशकालो जन्तुपीडां बाधां विना प्रयतते ।३।

शयनासनशुद्धिः —संयतेन शयनासनशुद्धिपरेण स्त्रीक्षुद्रचौर-नपुंसकचोरमद्यपायिवधकपालकद्यूतकारपक्षिवधकजीवलोकादि-पापजनावासावर्ज्याः श्रृङ्गारविकारभूषणोज्ज्वलवेषवेश्याक्री-डाभिरामगीतनृत्यवादित्राकुलप्रदेशा, विकृताङ्गगुह्यदर्शनकाष्ठम-यालेख्यहास्योपभोगमहोत्सववाहनदमनायुधव्यायामभूमयश्च रागकारणेन्द्रियगोचरविषया मदमानशोककोपकलहस्थानादय-श्च परिहर्तव्याः, अकृत्रिमा गिरिगुहातरुकोटरादयः कृत्रिमाश्च शून्यागारादयो मुक्तमोचितावासाः अनात्मोद्देशनिष्पन्नाः निरा-रम्भाः सेव्याः । तत्र संयतस्य त्रिविधो निवासः स्थानमासनं शयनं चेति, पादौ चतुरङ्गुलान्तरे प्रसार्य प्रलम्बितभुजो व्युत्सृष्ट-ममुखो भूत्वा यत्रारम्भातो यथावत्प्रमादः पराक्रमबलवीर्यसदृशः

कर्मक्षयप्रयोजनः असंक्लिष्टमतिस्तिष्ठेत्, अथ न शक्नुयात् निष्प्रतिज्ञातः पर्यङ्कादिभिरासनैरासीत। यद्यपरिमितकालयोगः खिन्नो वा एकपार्श्वबाहुप्रलम्बनसंवृत्ताङ्गादिभिरल्पकालश्रमपरीहारार्थम् शयीत ॥७॥

विनयशुद्धिः —अर्हदादिपरमगुरुषु यथा अर्हत्पूजाप्रवणा ज्ञानादिषु यथाविधिभक्तियुक्ता गुरोः सर्वत्रानुकूलवृत्तिः प्रश्नस्वाध्यायवाचनाकथाविज्ञापनादिषु प्रतिपत्तिकुशला देशकालभावावबोधनिपुणा आचार्यानुमतचारिणी, तन्मूला सर्वसम्पदः सैव भूषा पुरुषस्य, सैव नौ. संसारसमुद्रोत्तरणे ॥८॥

धर्मः क्रियतां त्वया बुध ! सदा, धर्मं कुरु प्रत्यहं,
धर्मेण वरमुक्तिमार्गमतुलं, धर्माय दीक्षां श्रय ।
धर्मात् तेन शिवंकरः परजनो, धर्मस्य मूलं भज,
धर्मे तिष्ठ विधेहि धर्ममलं, हे धर्म ! मां रक्षय ॥
आर्यदेशकुलरूपबलादि, बुद्धिबन्धुरमवाप्य नरत्वं ।
धर्मकर्म न करोति जडो यः, पोत मुज्झति पयोधिगतः सः ।

ॐ ह्रीं उत्तमसंयमधर्माङ्गाय नमः

दयाढ्यं संयमं मुक्ति-कर्त्तारं स्वेच्छयातिगं ।
पूजया परया भक्त्या, पूजयामि तदाप्तये ॥
ॐ ह्रीं परमब्रह्मणे संयमधर्माङ्गाय अर्घ्यं
निर्वपामीति स्वाहा

# उत्तमतपोधर्मः

## *मङ्गलाचरणम्*

सर्वः प्रेप्सति सत्सुखाप्तिमचिरात्, सा सर्वकर्मक्षयात्,
सद्वृत्तात् स च तच्च बोधनियतं, सोऽप्यागमात् स श्रुतेः ।
सा चाप्तात् स च सर्वदोषरहितो, रागादयस्तेऽप्यतः,
तं युक्त्या सुविचार्य सर्वसुखदं, सन्तः श्रयन्तु श्रियै ।
धर्मो जीवदया गृहस्थशमिनो, भेदाद् द्विधा च त्रयं,
रत्नानां परमं तथा दशविधोत्कृष्टक्षमादि स्ततः ।
मोहोद्भूतविकल्पजालरहिता, वागङ्गसङ्गोज्झिता,
शुद्धानन्दमयाऽऽत्मनः परिणतिः, धर्माख्यया गीयते ॥
तपो मनोऽक्षकायानां, तपनात् सन्निरोधनात् ।
निरूच्यते दृगाद्याविर्भावायेच्छानिरोधनम् ॥३॥
यद्वा मार्गाऽविरोधेन, कर्मोच्छेदाय तप्यते ।
अर्जयत्यक्षमनसो, स्तत्तपो नियमक्रिया ॥४॥
अन्तर्बहिर्मलप्लोषा-दात्मनः शुद्धिकारणं ।
शारीरं मानसं कर्म, तपः प्राहुस्तपोधनाः ॥५॥
विधेयानि तपांस्येव, धर्मसिद्धिकराण्यपि ।

बुधै र्द्वादशभेदानि, स्व शक्त्या धर्मसिद्धये ॥६॥
ध्रुवं च सिद्धिश्चतुर्ज्ञान, स्तीर्थंकृत् त्रिदशार्चितः।
अनिगूहितबलंवीर्य-मुद्यतः कुरुते तपः ॥७॥
त्रखण्ड तपसे, चक्रं चक्री, ततस्तपसः फलं,
सुखमनुपमं, स्वोत्थं नित्यं, ततो न तदद्भुतम्।
इदमिह महत्, चित्रं यत्तद्, विषं विषयात्मकं,
पुनरपि सुधी, स्त्यक्तं भोक्तुं, जहाति महत्तपः ॥८॥
अस्मिन्नस्तपसा तुल्यं, न हितं विद्यते परं।
तस्मात् सर्वात्मना भव्यैस्तस्मिन् यत्नो विधीयताम् ॥
आत्मशुद्धिरियं प्रोक्ता, तपसैव विचक्षणैः।
किमग्निना विना शुद्धि, रस्ति काञ्चनशोधने १०॥
धादुगद जह कणयं सुज्झइ, धम्मंतमग्गिणा महदा।
सुज्झइ तवग्गिधंतो, तह जीवो कम्मधादुगदो ॥११॥
जह धाऊ धम्मंतो, सुज्झदि सो अग्गिणा दु संतत्तो।
तवसा तहा वि सुज्झदि, जीवो कम्मेहिं कणयं वा ॥
वरिससहस्सेण पुरा, जं कम्मं हणइ तेण काएण।
तं संपहि वरिसेण हु, णिज्जरइ हीणसंहणणो ॥१३॥
मोक्षार्थं मुनना निदानरहिताः, संप्राप्य सद्दर्शनं,

कुर्वन्तु प्रमथं तपो मुनिजनैः संसेव्यमानं परं ।
नो चेद् व्यर्थं मनुष्यजन्म नितरां, ज्ञात्वाऽथवा ज्ञानतः ।
कुर्युस्ते सततं प्रशान्तमनसः, तत्त्वार्थबोधे रताः ॥१४॥
दुर्लभमशुद्धमपसुख,-मविदितमृतिसमयमल्पतरमायुः ।
मानुष्यमिहैव तपो, मुक्तिस्तपसैव तत्तपः कार्यम् ॥१५॥
मनुष्यभावसुकरं, प्रमत्तेन मया पुरा ।
विवेकिनाऽपि न कृतं, तपो धिग्मामचेतनम् ॥१६॥
दानेन पूजया साधु, शोभते गृहिणां तपः ।
ज्ञानेन क्षमया राग-द्वेषत्यागेन योगिनाम् ॥१७॥
यावत् स्वास्थ्यं शरीरस्य, यावच्चेन्द्रियसम्पदः ।
तावद् युक्तं तपः कर्तुम्, वार्धक्ये केवलं श्रमः ॥१८॥
बाह्यं तपः षड्विधमात्मशक्त्या,
तथाऽन्तरङ्गं सव संविभक्त्या ।
कर्मन्धदाहोर्ध्वगतिप्रकाशकं,
विधीयतां पावकसन्निकाशम् ॥१९॥
तपसा निर्जरा विद्याद्, द्विप्रकारं तपश्च तत् ।
बाह्यमभ्यन्तरं चेति, प्रत्येकं तच्च षड्विधम् ॥२०॥
एसो बारहभेओ, उग्गतवो जो चरेदि उवजुत्तो ।

सो खविय कम्मपुंजं, मुत्तिसुहं उत्तमं लहइ ॥२१॥

बाह्यं वल्माद्यपेक्षत्वात्, परप्रत्यक्षभावतः ।
परदर्शनिपाखण्डि,—गेहिकार्यत्वतश्च तत् ॥२२॥

तत्तपोऽभिमतं बाह्यं, येन चेतो न दुष्यति ।
जायते येन च श्रद्धा, येन योगक्षति र्न च ॥२३॥

बाह्यैस्तपोभिः कायस्य, कर्शनादक्षमर्दने ।
छिन्नबाहु र्भट इव, विक्रामति कियन्मनः ॥२४॥

परिणामविशुद्ध्यर्थं, तपो बाह्यं विधीयते ।
न हि तन्दुलपाकः स्यात्, पावकादिपरिक्षये ॥२५॥

वशे यथा स्युरक्षाणि, नैवधावन्ति चोत्पथं ।
तथा प्रयतितव्यं स्या, द्वृतिमाश्रित्य मध्यमाम् ॥२६॥

एकोपवासमूलः षण्,—मासक्षपण पश्चिमः सर्वः ।
अद्धाऽनशनविभागः, स एष वाञ्छानुगं चरतः ॥२७॥

तपस्तावद् बाह्यं चरति सुकृती पुण्यचरितः,
ततश्चात्माधीनं नियतविषयं ध्यानपरमम् ।
क्षपत्यन्तर्लीनं चिरतरचितं कर्मपटलम् ,
ततो ज्ञानाम्भोधि विशति परमानन्दनिलयं ॥२८॥

इष्टमृष्टोत्कटरसै-राहारैरुद्भटीकृताः ।

यथेष्टमिन्द्रियभटा, भ्रामयन्ति बहिर्मनः ॥२६॥
न केवलमयं कायः, कर्शनीयो मुमुक्षुभिः ।
नाप्युत्कटरसैः पोष्यो, मृष्टैरिष्टैश्च वल्भनैः ॥३०॥

अहर्निशं जागरणोद्यतो जनः,
श्रमं विधत्ते विषयेच्छया यथा ।
तपः श्रमं चेत् कुरुते तथा क्षणं,
किमश्नुतेऽनन्तसुखं न पावनम् ॥३१॥

यद्यन्तर्निहितानि खानि, तपसा बाह्येन किं फल्गुना ।
नैवान्तर्निहितानि खानि, तपसा बाह्येन किं फल्गुना
यद्यन्तर्बहिरन्यवस्तु, तपसा बाह्येन किं फल्गुना
नैवान्तर्बहिरन्यवस्तु, तपसा बाह्येन किं फल्गुना ॥३३॥

आगमसम्मताहारग्रहणफलमाह–

दोषहरणायेष्टाः हि, उपवासाद्युपक्रमाः ।
प्राणसंधारणायाऽयं, आहारः सूत्रदर्शितः ॥३४॥
सिद्ध्यै संयमयात्राया स्तत्तनुस्थितिमिच्छुभिः ।
ग्राह्योनिर्दोष आहारो, रसासङ्गाद् विनाऽपिभिः ॥३५॥
संयमाविप्रसिद्ध्यर्थं, रागविच्छेदनाय च ।
कर्मनिर्मूलनायाहु, सम्यक् त्वनशनं तपः ॥३६॥

निगदितं बहुधेति जिनेश्वरः, अनशनं भवसन्ततिनाशनं ।
यदभिसेवनमाचरतां सतां, गलति कर्मकबन्धकडम्बरम् ॥
मोक्षार्थं त्यज्यते यस्मिन्, आहारोऽपि चतुर्विधः ।
उपवासः स तद्भेदाः, सन्ति षष्ठाष्टमादयः ॥३७॥
अद्धाऽनशनं सर्वाऽनशनं, द्विविकल्पमनशनमिहोक्तं ।
विहृतिभृतोऽद्धाऽनशनं, सर्वानशनं तनुत्यागे ॥३८॥
यदज्ञानेन जीवेन, कृतं पापं सुदारुणम् ।
उपवासेन तत्सर्वं, दहत्यग्निरिवेन्धनम् ॥३९॥
जीवेन यानि पापानि समुपात्तानि संसृतौ ।
संहरेत् प्रोषधस्तानि, हिमवत् पद्मसञ्चयम् ॥४०॥
उपेत्याक्षाणि सर्वाणि, निवृत्तानि स्वकार्यतः ।
वसन्ति यत्र स प्राज्ञैः, उपवासोऽभिधीयते ॥४१॥
विषयाहारकषायाणां, त्यागो यत्र विधीयते ।
उपवासः स विज्ञेयः, शेषं लङ्घनकं विदुः ॥४२॥
उपावृत्तस्य दोषेभ्यो, यस्तु वासो गुणैः सह ।
उपवासः स विज्ञेयः, सर्वभोगविवर्जितः ॥४३॥
अप्रवृत्तस्य दोषेभ्यः, सहवासो गुणैः सह ।
उपवासः स विज्ञेयो, न शरीरविशोषणम् ॥४४॥

चतुःप्रकाराहारलक्षणमाह

मुद्गौदनाद्यमशनं, क्षीरजलाद्यं मतं पिबं पेयम् ।
ताम्बूलदाडिमाद्यं, स्वाद्यं खाद्यं त्वपूपाद्यम् ॥४५॥
प्राणानुग्राहि पानं स्या-दशनं दमनं क्षुधः ।
खाद्यते यत्नतः खाद्यं, स्वाद्यं स्वादोपलक्षितम् ॥४६॥
भोजनाद्यशनं स्वाद्यं, ताम्बूलादि जलादिकं
पेयं खाद्यं त्वपूपाद्यं, त्याज्यान्येतानि शक्तितः ॥४७॥

त्रिविधोपवासलक्षणमाह

उपवासो वरो मध्यो, जघन्यश्च त्रिधापि सः ।
कार्यो विरक्तैः विधिवद्, बह्वागः क्षिप्रघातनम् ॥४८॥
धारणे पारणे सैक-भक्तो वर्यश्चतुर्विधः ।
साम्बुर्मध्योऽनेकभक्तः, सोऽधमस्त्रिविधाशुभो ॥४९॥
चतुर्धाशनवर्जनं–'उपवासोऽशनाद्युतेः ।
सकृद्भुक्तिश्च भुक्त्यर्धं, तपोऽनशनमिष्यते ॥५०॥

'उप समीपे परमब्रह्मण आत्मनः शुद्धबुद्धैकस्वरूपस्य वसतीति उपवासः ।

एक्कं पि णिरारंभो उववासं जो करेदि उवसंतो ।
बहुभवसंचियकम्मं, सो णाणी खवदि लीलाए ॥५१॥

उववासं कुव्वंतो आरंभं करेदि मोहादो ।
सो णियदेहं सोसदि, ण झाडए कम्मलेसं पि ॥५२॥
उपवासः सकृद्भुक्तिः, सौवीराहारसेवनं ।
इत्येवमाद्यमुद्दिष्टं, साधुभिर्न हिणा तपः ॥५३॥
स्वार्थादुपेत्य शुद्धात्म–न्यक्षाणां वसनाल्लयात् ।
उपवासोऽशनं स्वाद्य, लाद्यपेयविवर्जनम् ॥५४॥
शक्ति विना कृतोपवासस्य फलमाह
यथाऽऽहारमयो जीव, स्तथाहारविराधितः ।
नातंरौद्रातुरो ध्याने, रमते न च संयमे ॥५५॥
प्रसिद्धमन्नं वै प्राणा, नृणां तत् त्याजितो हठात् ।
नरो न रमते ध्याने, दुर्ध्यानार्तो न संयमे ॥५६॥
स्वयं न भुङ्क्ते अन्यं भोजयति, परस्य भोजनमनुजानाति मनसा वचसा कायेन च, स्वयं क्षुधा पीडितः सन् आहारमभिलषति मनसा मम पारणां कः प्रयच्छति, क्व वा सरसमाहार लप्स्यामीति चिन्ता, यद्वाऽद्य रसवदाहारमन्तरेण मम परिश्रमो नोपैति, अनर्थकमिदमनुष्ठितं मया सन्तापकारीदमग्रे नाचरिष्यामीति मनसि सकल्पकरण अनशनतपोऽतिचारो भवति । अथावमोदर्यमाह
दोषप्रशमसन्तोष, स्वाध्यायादिप्रसिद्धये ।
द्वितीयमवमोदर्यं, तपः सद्भिः प्रशस्यते ॥५७॥

स्वाहारतो यथाशक्ति, ग्रासादिपरिहापनं । ऊनोदरं तपोऽथवा-ऽवमौदर्यमुच्यते ॥ सहस्रतन्दुलैरेको ग्रासो भवति, एककवलीनो य आहारस्तज्जघन्यमवमौदर्यम् तपः एकग्रासमानो य आहार-स्तदुत्तममवमौदर्यम् । अथवा एकतन्दुलभक्षणं । जघन्योत्कृष्टभेद मध्येऽतृप्तिभोजनं तन्मध्यमवमौदर्यम् । अनेन तपसा निद्राजयश्चासनस्थैर्यम्, ग्लानिहानिः, ध्यानं श्रुताध्ययनं [illegible] इत्यादयो गुणा भवन्त्यतोऽवमौदर्यम् तपो ध्यानसिद्धये सदा कार्यम् ।

आहारस्तृप्तये पुंसां, द्वात्रिंशत् कवला जिनैः ।
अष्टाविंशतिरुद्दिष्टो, योषितः प्रकृतिस्थितः ॥५८॥

परं बहुभोजनं भोजयामीति मनसि चिन्तनं, भुङ्क्ष्व यावद् भवतस्तृप्तिरिति वचसा कथनम्, बहुभोजनकरणाय हस्तसंज्ञाकरणम् अवमौदर्यतपोऽतिचारो जायते ।

अथवृत्तिपरिसंख्यातपःप्राह

एकागारादिविषयः, संकल्पश्चित्तरोधकः ।
स वृत्तिपरिसंख्यानं, तृतीयं कथ्यते तपः ॥५९॥

यथा चतुःपथमार्गवीथीगृहमार्गकादिषु नियमग्रहसंकल्पं दातृभोजनपात्रैः [illegible] वा प्रतिज्ञां गृह्णाते तद् बहुभेद वृत्तिपरिसंख्यानं तपो भवति । अनेन तपसा यतीनां धीरत्वं दृश्यते, लोल्यता आशादयो दोषा नश्यन्ति । तथा चोक्तम्

दातृपात्रगृहवस्तुगोचरो, मानसे भवति यो विनिश्चयः ।

उद्गमाद्यवलमन्त्रकारणं, तत्तपोऽकथि जिनैस्तृतीयकम् ॥
अतः वृत्तिपरिसंख्यानं तपः साधवो यथाशक्ति कुर्वन्तु ।
गृहदायकपात्रादिकसंकल्पं विधाय अन्यथाकरणम् वृत्तिपरि-
संख्यानातिचारः ॥ अथरसपरित्याग तपःप्राह

रसत्यागो भवेत्तैल-क्षीरेक्षुदधिसर्पिषाम् ।
स्वाध्यायसुखसिद्ध्यर्थं,-मक्षवर्गप्रशान्तये ॥५५॥
तपो रसपरित्याग, स्तुर्यमार्यैः प्रकीर्त्यते ।
एकद्वित्रीणि चत्वारि, त्यजत स्तानि पञ्चधा ॥५६॥

तद् यथा-वृष्यस्येष्टस्य रसस्य दुग्धदधिघृतलवणेक्षुतैलसंज्ञस्य परित्यागो यो भवति स रसपरित्यागतपः स्यात् । अनेनेन्द्रियमद निग्रहो निद्राविजयः स्वाध्यायादिसुखसिद्धिश्च भवति एव ज्ञात्वा
रसत्यागः क्रियते मुमुक्षुभि र्यथाशक्ति

" रसत्यागप्रतिज्ञस्य, रससिद्धिरमून्मुनेः "

रसत्यागं कृत्वाऽपि तद्रसाभिलाषात्यजनम्, परस्मै रसवदाहारं कारापनम्, रसवदाहारानुमननम् रसपरित्यागस्यातिचारः

अथविविक्तशय्यासनतपो व्याचष्टे

शून्यागारादिषु ज्ञेयं, साधु शय्यासनादिकम् ।
पञ्चमं तत्तपः साधो र्विविक्तशयनासनम् ॥५८॥
एकान्तयोग्यतमावनादि, सिद्ध्यर्थं गतासंयतजन्तुसङ्ग ।

याऽवस्थितिः शून्यनिकेतनादौ, विविक्तशय्येति तपस्तदुक्तम् ॥

तद्यथा– विविक्तेषु शून्येषु त्रसस्थावरजीवरहितेषु गृहगुहाकन्दरादिषु यच्छयनं तथाऽऽसनं च क्रियते मुनिभिस्तत् विविक्तशयनासनं तप. अनेन ध्यानाध्ययनबाधाऽभावो ब्रह्मचर्यसिद्धिश्च भवति । अत एतत्तपो मुमुक्षुभिः सदैव विधीयते । ध्यानाध्ययन–बाधकस्थाने एवं असंयमकारकवसतौ निवासकरणम् । विविक्तशयनासनतपोऽतिचारो भवति ।

अथ कायक्लेशतपोनिरुपयति

योगैस्त्रैकालिकैर्नित्य-मुपवासादिभिश्रमः ।
साधोःसाधुभिरित्युक्तं, तपः षष्ठमनिन्दितम् ॥६०॥
विशुध्येत् नान्तरात्माऽयं, कायक्लेशविधं विना ।
किमग्नेरन्यदस्तीह, काञ्चनाश्मविशुद्धये ॥६१॥
गर्भात् प्रभृत्यसौ देवो, ज्ञानत्रयमुद्वहन् ।
दीक्षानन्तरमेवाप्त, मनःपर्ययबोधनः ॥६२॥
तथाप्युग्रं तपोऽतप्त, सिद्धत्वे ध्रुवभाविनि ।
सज्ज्ञानलोचनो धीरः, सहस्रं वार्षिकं परम् ॥
तेनाऽभीष्टं मुनीन्द्राणां, कायक्लेशाख्यं तपः ।
तपोऽङ्गेषु प्रधानाङ्ग-मुत्तमाङ्गमिवाङ्गिनाम् ॥६४॥
अनिगूहितवीर्यस्य, कायक्लेशस्तपः स्मृतम् ।

तच्च मार्गाविरोधेन गुणाय गदितं जिनैः ॥६५॥

ग्रीष्मकाले ग्रातपे स्थितिः, वर्षाकाले तरुमूलनिवासः, शीतकाले निरावरणस्थाने स्थितिकरण, तथा चतुष्पथे नद्यादितीरे निवासः, नानाऽऽसनविधानं इत्यादिकं कायक्लेशतप उच्यते । ग्रनेन तपसा शरीरदुःख सहनं, वपुःसुखत्यागो, जिनधर्मप्रभावना च भवति । अत्र केचित् कथयन्ति इद कायक्लेशाख्य तप परीषहरूपं जातं तन्न परीषहस्तु यदृच्छया समागच्छति इदं तु यतिभि कर्म-विनाशाय स्वय क्रियते । इति परीषहकायक्लेशतपसोऽन्तर ज्ञेयम् । उष्णार्तस्य शीतलद्रव्येच्छाकरणं, सन्तापापगमो मम कथ स्यादिति चिन्ता, पूर्वानुभूतशीतलद्रव्यस्मरणं, कठोरातपे द्वेष·, शीतलप्रदेशाद् गात्रप्रमार्जनं विना ग्रातपप्रवेशः, ग्रातपसतप्तशरीरमार्जन विना छायाप्रवेश इत्यादिक कायक्लेशतपोऽतिचारो भवति । कायक्लेश तपः किमर्थम् क्रियते—शुभध्यानपरिचयार्थम्' दुःखोपसहनार्थम् विषय सुखासक्तिभङ्गार्थम् ।

इहपरलोयसुहाणं, णिरवेक्खो जो करेदि समभावो।
विविहकायकिलेस तवधम्मो णिम्मलो तस्स ॥६६॥

अथ ग्रष्टमीपर्वमाहात्म्यमाह

यः पर्वण्युपवासं हि, विधत्ते भावपूर्वकं ।
नाकराज्यं च संप्राप्य, मुक्तिनारीं वरिष्यति ॥६७॥
ग्रष्टम्यामुपवासं हि, ये कुर्वन्ति नरोत्तमाः ।

हत्वा कर्माष्टकं तेऽपि, यान्ति मुक्तिं सुदृष्टयः ॥६८॥

नियमेनोपवासं यः, त्वष्टम्यां कुरुते पुमान् ।

स्वाष्टकर्माणि हत्वा स, भजेत् सारं गुणाष्टकम् ॥६९॥

अष्टमे दिवसे सारे, यः कुर्यात् प्रोषधं वरं

इन्द्रराज्यपदं प्राप्य, क्रमाद् याति स निर्वृतिम् ॥७०॥

सदाऽष्टम्युपवासस्य, धर्मेण गृहनायकाः ।

अष्टाविधिजं पापं, हत्वा पुण्यं भजन्ति वै ॥७१॥

मनोवाक्काययोगेन, त्यक्त्वा सर्वाशुभं बुधाः ।

उपवासदिने धीराः, तिष्ठन्ति मुनयो यथा ॥७२॥

चतुर्दशीपर्वमाहात्म्यमाह

चतुर्दश्यां समं पर्व, नास्ति कालत्रये वरम् ।

धर्मयोग्यं महापूत-मुपवासादिगोचरम् ॥७३॥

प्राणान्तेऽपि न मोक्तव्य, श्चतुर्दश्यां हि धीधनैः ।

उपवासोऽतिधर्मार्थ, काममोक्षफलप्रदः ॥७४॥

प्रोषधं यच्चतुर्दश्या-मेकचित्तेन संभजेत् ।

प्राप्य षोडशकं नाकं, व्रजेन् मुक्तिवराङ्गनाम् ॥७५॥

द्विसप्ताद्युपवासेन, पापं हत्वा गृहादिजम्

चतुर्दशादिसञ्जातं, महापुण्यं लभेत् नरः ॥७६॥

किमत्र बहुनोक्तेन त्यक्त्वा सावद्यमञ्जसा ।
यतिवत् तिष्ठ भो मित्र!, प्रोषधे स्वर्गमुक्तये ॥७७॥
एवं यः प्रोषधं कुर्यात्, सर्वहिंसादिवर्जितम् ।
क्षिपेद् वैराग्यमापन्नः, एनः संख्याविवर्जितम् ॥७८॥
तपसाऽलंकृतो जीवो यद्यद् वस्तु समीहते ।
तत् तदेव समायाति, भुवनतृतीये ध्रुवम् ॥७९॥
ये ज्ञात्वा भवमुक्तिकारणगणं, बुद्धया सदा शुद्धया,
कृत्वा चेतसि मुक्तिकारणगणं, त्रेधा विमुच्याऽपरम् ।
जन्मारण्यनिसूदनक्षममरं जैनं तपः कुर्वते,
तेषां जन्म च जीवितं च सफलं, पुण्यात्मनां योगिनां
सम्यग्ज्ञानविवेकशून्यमनसः, सिद्धान्तसूत्रद्विषः,
निस्त्रिंशाः परलोकनष्टमतयो मोहानलोद्दीपिताः ।
दौर्जन्यादिकलङ्किता यदि नरा, न स्युर्जगत्यां तदा,
कस्मात् तीव्रतपोभि रुन्नतधियः काङ्क्षन्ति मोक्षश्रियम्

तपःफलमाह

तपः करोति यो धीमान्, मुक्तिश्रीरञ्जिताशयः ।
स्वर्गगृहाङ्गणस्तस्य, राज्यसौख्यस्य का कथा ॥८२॥
कर्माङ्गतेजो रागाशा–हानि ध्यानादिसंयमाः ।

दुःखक्षमासुखासङ्ग-ब्रह्मनिष्ठोताश्च तत्फलम् ॥८३॥

अह धाऊ धम्मंतो, सुज्झदि सो अग्गिणा दु संततो ।
तवसा तहा वि सुज्झदि, जीवो कम्मेहि कणयं वा

विशुद्ध्यति हुताशेन, सदोषमपि काञ्चनं ।
यद्वत्तथैव जीवोऽयं, तप्यमानस्तपोऽग्निना ॥८५॥

नास्ति लोके तपो जैनं, संसारोन्मूलनक्षमम् ।
ध्रुवं तपोऽक्षयं तप्तं, पक्वतीव्यथयं फलम् ॥८६॥

निर्वेदपदवीं प्राप्य, तपस्यति यथा यथा ।
यमी क्षपति कर्माणि, दुर्जयानि तथा तथा ॥८७॥

तपसा प्राप्यते राज्यं, तपसा स्वर्गसम्भवः ।
तपसा शिवसौख्यं च, त्रैलोक्यैश्वर्यंकृत्तपः ॥८८॥

तपश्चिन्तामणि नूनं, कल्पवृक्षवनं धनं ।
गोकुलं कामधेनूनां, निरीहै र्यदनुष्ठितम् ॥८९॥

जनताहिताय तमिताश्च, शर्मनिधिमनेकलब्धयः ।
शीतरुचिमिव शरत्समये, शिशिराः सुधारसपरिप्लुताश्च

सस्पृहतपःफलमाह

पूजालाभप्रसिद्ध्यर्थं, तपस्तप्येत योऽल्पधीः ।
शोष एव शरीरस्य, न तस्य तपसः फलम् ॥९१॥

विवेकं विना यत्तपो विधीयते तत्तपो तनुतापकृद् भवति तपः प्रभावोऽचिन्त्यो वर्तते, केवलज्ञानप्राप्तिस्तपःप्रभावत एव जायते, कामनिद्राप्रमादजयार्थम् बाह्यतपो विधीयते साधुभिः। विविधा ऋद्धयो मनःपर्ययज्ञानं च निर्दोषोग्रतपसः उत्पद्यते । अभ्युदय सुख निःश्रेयससुखं च तपसः फलम्, तपः निर्जरानिमित्तं कथितं जिनैः, तपोः हि प्रत्ययं कर्म संवृणोति,

स्वात्मारोपितशीलसंयमभरास्, त्यक्तान्यसहाय्यकाः,
कायेनापि विलक्षमाणहृदयाः, सहायकं कुर्वतः ।
तप्यन्ते परदुष्करं गुरुतपस्, तत्रापि ये निःस्पृहा,
जन्मारण्यमतीत्य भूरिभयदं वाञ्छन्ति ते निर्वृतिम ॥
तपः फलति कल्याणं. कृतमल्पमपि स्फुटं ।
वहुशाखोपशाखाढ्यं, वटबीजं यथा वटम् ॥९३॥
विदधानस्तपो भक्त्या, निरालस्यो विधानतः ।
देशान्तरमपि प्राप्तः, स बन्धुरिव गृह्यते ॥९४॥
मातेवास्ति सुविश्वास्यः, पूज्यो गुरुरिवाऽखिलैः ।
महानिधिरिव ग्राह्यः, सर्वत्रैव तपोधनः ॥९५॥
लोकद्वये पराः पूजाः, प्राप्यन्ते कुर्वता तपः ।
आवर्जयन्तेऽखिला देवाः,सुरेश्वरपुरःसराः ॥९६॥
लभ्यन्ते नरदेवानां, सर्वाः कल्याणसम्पदः ।

परमं सिद्धिसौख्यं च, कुर्वता निर्मलं तपः ॥९७॥
मृत्युजन्मजरार्तस्य, तपः सुखविधायकं ।
महारोगातुरस्येव, भैषज्यं वीर्यसंयुतम् ॥६८॥

## अथाभ्यन्तरं तपो व्याकर्तुमाह

बाह्यद्रव्यानपेक्षत्वात्, स्वसंवेद्यत्वतः परैः ।
अनध्यासात् तपः प्रायश्चित्ताद्यभ्यन्तरं भवेत् ॥१॥
प्रायश्चित्तं विनीतत्वं, वैयावृत्यमनिन्दितम् ।
स्वाध्यायश्च तनूत्सर्गो ध्यानमन्तर्गतं तपः ॥२॥
प्रायः प्राणी करोत्येव, यत्र चित्तं सुनिर्मलं ।
तदाहुः शब्दसूत्रज्ञाः, प्रायश्चित्तं यतीश्वराः ॥३॥
प्राय इत्युच्यते लोकः, तस्य चित्तं मनो भवेत् ।
एतच्छुद्धिकरं कर्म, प्रायश्चित्तं प्रचक्षते ॥४॥
सति दोषे न चरित्रं, कर्माभावो न तद्विना ।
निर्वृतिस्तदभावे न, तस्माद् व्रतमनर्थकम् ॥५॥
अत एव प्रकुर्वन्ति, तदेवादौ महत्तपः ।
प्रायश्चितमकुर्वाणो, न नरः शुद्धिमृच्छति ॥६॥
अकुर्वन् विहितं कर्म, निन्दितं च समाचरन् ।
प्रसजंश्चेन्द्रियार्थेषु, प्रायश्चित्तीयते नरः ॥७॥

प्रायश्चित्तं किमर्थमनुष्ठीयते इत्याह

प्रमादवोषविच्छेद-ममर्यादाविवर्जनं ।
भावप्रसादं निःशल्य-मनवस्थाव्यापोहनम् ॥८॥
चतुर्थाऽऽराधनं बाढम्, संयमस्यैवमादिकम् ।
सिसाधयिषताऽऽवश्यम्, प्रायश्चित्तं विपश्चिता ॥९॥

प्रायश्चित्तलक्षण एवं भेदान्व्याचष्टे

यत्कृत्याऽकरणे वर्ज्याऽवर्जने च रजोऽर्जितं ।
सोऽतिचारोऽत्र, तच्छुद्धिः, प्रायश्चित्तं दशात्म तत् ॥

*आलोचनामाह* — एकान्तनिषण्णाय, प्रसन्नचेतसे, विज्ञातदेशकालाय गुरवे शिशुवत् सरलबुद्धिना शिष्येण विनयसहितं यदात्मप्रमाद-जनितदोषो यथा भवति तथा निवेद्यते तदालोचनम् ।

साऽऽलोचनाद्यस्तच्छुद्धेः, प्रश्रयाद् धर्मसूरये ।
यद्दशाऽऽकम्पिताद्यूनं, स्वप्रमादनिवेदनम् ॥ ॥११॥

प्रश्रयस्वरूपमाह

मस्तकविन्यस्तकरः, कृतिकर्म विधाय शुद्धचेतस्कः ।
आलोचयति सुविहितः, सर्वान् दोषांस्त्यजन् रहसि ॥१२॥
प्राह्णेऽपराह्णे सद्देशे, बालवत साधुनाऽखिलम् ।
स्वागश्चिराजंवाद् वाच्यं, सूरेः शोध्यं च तेन तत् ॥
अर्हत्सिद्धसमुद्राब्ज,सरःक्षीरफलाकुलम् ।

तोरणोद्यानसद्मा हि, मठचैत्यबृहद् गृहम् ॥१४॥
सुप्रशस्तं भवेत् स्थानं, मध्यवर्ज्येऽवमाधिकं ।
सूरिरालोचनां तत्र, प्रतीच्छत्यस्य शुद्धये ॥१५॥
जह बालो जंपंतो, कज्जमकज्जं च उज्जुयं भणति ।
तह आलोचेयव्वं, मायामोसं च मोत्तूणं ॥१६॥

आलोचनादशदोषान् प्राह

आकम्पितं गुरुच्छेद,-मयादावर्जनं गुरोः ।
तपः शूरस्तवात्तत्र, स्वाऽशक्त्यानुमापितम् ॥१७॥
यद् दृष्टं दूषणस्यान्य-दृष्टस्यैव तथा गुरोः ।
बादरं बादरस्यैव, सूक्ष्मं सूक्ष्मस्य केवलम् ॥१८॥
छन्नं कीदृक् चिकित्से, दृग्दोषे पृष्ट्वेति तद्विधिः ।
शब्दाकुलं गुरोः स्वागः, श्रावणं शब्दसंकुले ॥१९॥
दोषो बहुजनं सूरि–दत्तान्यच्छुण्णतत्कृतिः ।
बालाच्छेदग्रहोऽव्यक्तं, समात्तत्सेवितं स्वसौ ॥२०॥
दशेत्युज्झन् मलान् मूला-प्राप्तः पदविभागिकां ।
प्रकृत्यालोचनां मूल-प्राप्तस्त्वौघीं तपश्चरेत् ॥२१॥

द्विविधालोचनामाह

ओघेन पदविभागेन, द्वेधाऽऽलोचना समुद्दिष्टा ।

मूलं प्राप्तस्योघो, पार्वविभागी ततोऽन्यस्य ॥२२॥
स्मरणपथमनुसरन्ति, प्रायो नायाति मे विमुग्धस्य ।
सर्वच्छिद्रः समजनि, ममेति वाऽऽलोचयेदोघात् ॥२३॥
प्रव्रज्यादिसमस्तं, क्रमेण यद् यत्र येन भावेन ।
सेवितमालोचयतः पार्वविभागी यथा तत्तत् ॥२४॥

आलोचनां विना महदपि तपः संवरसहभाविनीं निर्जरां न करोति, कृतायमपि चालोचनायां विहितमनाचरन् न दोषविजयी स्यात् । अतः सर्वदा नोच्चं गुरुवर्तं चाचर्यमिति शिक्षार्थमाह

सामौषधवन्महदपि, न तपोऽनालोचनं गुणाय भवेत् ।
मन्त्रवदालोचनमपि, कृत्वा नो विजयते विधिमकुर्वन् ॥
यः पिबत्यौषधं मोहात्, सामे तीव्ररुजि ज्वरे ।
प्रसुप्तं कृष्णसर्पं स, कराग्रेण परामृशेत् ॥२६॥
सद्गुरुदत्तप्रायश्चित्तोचितत्रिदश दोषातिचारं दृष्टान्तेन यथाऽष्टे

यथादोषं यथाम्नायं, दत्तं सद्गुरुणा वहन् ।
रहस्यमन्तर्भात्युच्चैः, शुद्धादर्श इवाननम् ॥२७॥

***प्रतिक्रमणम्***—निजदोषमुच्चार्योच्चार्य मिथ्या मे दुष्कृतमस्त्विति प्रकटीकृतमपराधं प्रतिक्रमणम् ।

मिथ्या मे दुष्कृतमिति, प्रायोऽपायं निराकृतिः ।

चरणादिभिरन्योन्याप्यतीचारे सति ध्यानमवलम्ब्य कायमुत्सृज्य अन्तर्मुहूर्तदिवसपक्षमासादिकालावस्थानं व्युत्सर्गं इत्युच्यते ।।
तप संज्ञं प्रायश्चित्तमाह–उपवासादिषड्विध बाह्यं यत्तपः तत्तपो नाम प्रायश्चित्तम् :

**कृतापराधः श्रमणः, सत्त्वादिगुणभूषणः ।**

**यत्करोत्युपवासादि विधि तत्क्षालनं तप ।।२२।।**

आलोचनप्रतिक्रमण तदुभयविवेक व्युत्सर्गं तपःप्रायश्चित्तविधे विषय माह–

**[1] भयत्वराशक्त्यबोध–विस्मृति [2] व्यसनादिजे ।**

**महाव्रतातिचारेऽमुंषोढा शुद्धिविधि चरेत् ।।२३।।**

१ भीत्वा पलायन, २ तुरुष्कादिमातङ्कः, आदिशब्देन रोगाभिभवादि गृह्यते । किञ्च–आचार्यमपृष्ट्वा आतापनादिकरणे, पुस्तकपिच्छादिपरोपकरणग्रहणे, परोक्षे प्रमादत आचार्यादिवचनाकरणे संघनाथमपृष्ट्वा संघनाथप्रयोजनेन गत्वाऽगमने परसंघादपृष्ट्वा स्वसंघगमने देशकालनियमेनावश्यकर्तव्यव्रतविशेषस्य, धर्मकथादिव्यासङ्गेन् विस्मरणे सति पुनः करणे अन्यत्रापि चैवंरूपे आलोचनमेव प्रायश्चित्तम् । षडिन्द्रियवागादि दुष्परिणामे, आचार्यादिषु हस्तपादादिसंघट्टने, व्रतसमितिगुप्तिषु स्वल्पाचारे पैशून्यकलहादिकरणे, वैयावृत्त्यस्वाध्यायादिप्रमादे, गोचरगतस्य लिङ्गोत्थाने, अन्यसंक्लेशकरणादौ च प्रतिक्रमण दिवसरात्र्यन्ते भोजन–

गमानादौ च प्रसिद्धम् ।

लोचनखच्छेदस्वप्नेन्द्रियातिचाररात्रिभोजनेषु पक्षमाससंवत्सरग-दिदोषादौ चोभयम् । मौनादिना विना आलोचनकरणे, उदर-कृमि निर्गमे: हिमदंशमशकादिमहावातादिसंघर्षातीचारे, स्निग्ध-भूहरिततृणपङ्कोपरिगमने । जानुमात्रजलप्रवेशाऽन्यदिमित्तवस्तुस्-वोपयोगकरणे । नावा नदीतरणे, पुस्तकप्रतिमापतनपञ्चस्थावर विघात अदृष्टदेशतनुमलविसर्गादिषु, पक्षादिप्रतिक्रमणक्रियान्त व्याख्यान प्रवृत्यन्तादिषु कायोत्सर्ग एव प्रायश्चित्त उच्चार-प्रस्रवणादौ च प्रसिद्ध कायोत्सर्ग ।

अथ छेद निर्दिशति-

दिवसपक्षमासादिविभागेन दीक्षाहापनं छेदो नाम प्रायश्चित्त कथ्यते ।

**चिरप्रव्रजिताहप्त-शक्त शूरस्य सागसः ।**

**दिनपक्षादिना दीक्षा-हापनं छेदमादिशेत् ॥३४॥**

अथ मूललक्षणमाह-

महाव्रतानां मूलच्छेदन विधाय पुनरपि दीक्षाप्रापण छेदोनाम प्राय-श्चित्तमुच्यते । अस्यापरनाम् उपस्थानाऽपि कथ्यते ।

**वृत्तेऽलसोऽवसन्नः पार्श्वस्थो मलिनो परदृशोष्टे निष्टे ।**

**संसक्तो मृगचरितः स्वकल्पिते प्रकटकुचरितस्तु कुशीलः ॥**

***इतो विस्तरस्तो यथा***—यो वसतिषु प्रतिबद्धः उपकरणोपजीवी वा

श्रमणानां पार्श्वे तिष्ठति स पार्श्वस्थ ॥१॥

**संसक्तः**—यो वैद्यकमन्त्रज्योतिषोपजीवी राजादिसेवकश्च स संसक्तः स्यात् ॥२॥

**स्वच्छन्दः**—यस्त्यक्तगुरुकुल एकाकित्वेन स्वच्छन्दविहारी जिन-वचनदूषकः स स्वच्छन्दो मृगचरित्र इति यावत् ॥३॥

**अवसन्नः**—यो जिनवचनानभिज्ञो मुक्तचारित्रभारो ज्ञानचरण भ्रष्टः करणालसश्च स अवसन्नः स्यात् । ॥४॥

**कुशीलः**—क्रोधादिकषायकलुषितात्मा व्रतगुणशीलैः परिहीनः संघस्यानयकारी च कुशील स्यात् ॥५॥

अथ परिहारस्य लक्षण विकल्पाश्चाह–

दिवसपक्षमासादिविभागेन दूरतः परिवर्जनं परिहारो अयं च परिहारस्त्रिविधः स्वसंघान्निर्वासनम्, परगणोपस्थानेन सह वर्तते परसंघानुसरणेन सह वर्तते । तथा पराञ्चिकम् नाम प्रायश्चित्तम् । विधिवद् दूरात्यजनं परिहारो। निजगणानुपस्थान, परग-णोपस्थानं, पराञ्चिकमित्ययं त्रिविधः ॥

**इतो विस्तरः**—प्रमदादन्यमुनिसम्बन्धिनमृषि छात्र वा परपाषण्डि प्रतिबद्धचेतनाचेतनद्रव्यं वा परस्त्रियं वा स्तेनयतो मुनीन् प्रहरतो वा अन्यदप्येवमादिविरुद्धाचरितमाचरतो नवदशपूर्वधर-स्यादित्रिकसंहननस्य जितपरीषहस्य दृढकर्मणो धीरस्य भवभी-तस्य निजगणानुपस्थानं नाम प्रायश्चित्तं भवति । तेन ऋष्याश्रमाद् द्वात्रिंशद्दण्डान्तरविहितविहारेण बालमुनीनपि वन्दमानेन प्रतिवन्दना

विरहितेन गुरुणा समालोचयता शेषजनेषु कृतमौनव्रतेन विधृत-पराङ्मुखपिच्छेन जघन्यतः पञ्च पञ्चोपवासा उत्कृष्टतः षण्मा-सोपवासा कर्तव्या । उभयमप्याद्वादशवर्षादिति । दर्पात्पुनर-नन्तरोक्तान् दोषानाचरतः परगणोपस्थान नाम प्रायश्चित्तं भवति। स सापराधः स्वगणाचार्येण परगणाचार्यम् प्रति प्रहेतव्यः । सोऽ-प्याचार्यस्तस्यालोचनमाकर्ण्य प्रायश्चित्तमदत्वा आचार्यान्तरं प्रस्थापयति सप्तम यावत् । पश्चिमश्च प्रथमालोचिताचार्यम् प्रति प्रस्थापयति । स एव पूर्व पूर्वोक्तप्रायश्चित्तेनैनमाचारयति । एव परिहारस्य प्रथमभेदोऽनुपस्थापनाख्यो द्विविधः । द्वितीयस्त्वयं पारञ्चिकाख्यः । स एव तीर्थंकरगणधरगणिप्रवचनसंघाद्यासा-दनकारकस्य नरेन्द्रविरुद्धाचरितस्य राजानभिमतोऽमात्यादीनां दत्त-दीक्षस्य नृपकुलवनितासेवितस्यैवमादिभिरन्यैश्च दोषैर्धर्मदूषकस्य स्यात् । तद्यथा, चातुर्वर्ण्यश्रमणसंघः सम्भूय तमाहूय एष महा-पापी पातकी समयबाह्यो न वन्द्य इति घोषयित्वा दत्वानुपस्थानं प्रायश्चित्त देशान्निर्घाटयति सोपि स्वधर्मविरहितक्षेत्र गणिदत्तं प्रायश्चित्तमाचरतीति परिहार ।

अथ श्रद्धानाख्यं प्रायश्चित्तकल्पमाह-

**गत्वा स्थितस्य मिथ्यात्वं, यद्दीक्षाग्रहणं पुनः ।**
**तच्छ्रद्धानमिति स्यात्-मुपस्थापनमित्यपि ॥३६॥**

दशविधप्रायश्चित्तस्य यथादोष प्रयोगविधिमाह-

**सैषा दशतयी शुद्धिर्बलकालाद्यपेक्षया ।**

यथावोषं प्रयोक्तव्या, चिकित्सेव शिवार्थिभिः ॥३७॥

दूष्यं देशबलं काल-मनलं प्रकृति वयः ।

सत्त्वं सात्म्यं तथाऽऽहार-मवस्थाश्च पृथग्विधाः ॥३८॥

सूक्ष्मसूक्ष्माः समीक्ष्यैषां, दोषौषधनिरूपणे ।

यो वर्तते चिकित्सायां, स न स्खलति जातुचित् ॥३९॥

व्यवहारनयाद् दशविधप्रायश्चित्तम् व्याख्यात निश्चयनयात्तत्भेद निर्णयार्थमाह-

व्यवहारनयादित्थं, प्रायश्चित्तम् दशात्मकम् ।

निश्चयात्तदसंख्येय-लोकमात्रमिदिष्यते ॥४०॥

इति प्रायश्चित्ततपो वर्णनम् ।

अथ विनयतपोलक्षणमाह-

स्यात् कषायहृषीकाणां, विनीतेर्विनयोऽथवा ।

रत्नत्रये तद्वति च, यथायोग्यमनुग्रहः ॥४१॥

हिताऽहिताप्तिलुप्त्यर्थं, तदङ्गानां सदाञ्जसा ।

यो माहात्म्योद्भवे यत्नः, स मतो विनयः सताम्

विनयफल दर्शयति-

वृद्धेष्वनुद्धताचारो, ना महिम्नाऽनुबध्यते

कुलशैलाननुत्क्रामन्, सरिद्भिः पूर्यतेऽर्णवः ॥४१॥

अथ विनयशब्द निरुक्तिं तत्फलमवश्यकर्तव्यतां चाह

यद्विनयत्यपनयति च, कर्मासत्तं निराहुरिह विनयम् ।
शिक्षायाः फलमखिल,-क्षेमफलश्चेत्ययं कृत्यः ॥४३॥

विनयस्य शिष्टाभीष्टगुणैकसाधनत्वमाह-

सारं सुमानुषत्वेऽर्हद्-रूपसंपदिहार्हती ।
शिक्षाऽस्यां विनयः सम्य-गस्मिन् काम्याः सतां गुणाः ॥

विनयहीनस्य शिक्षाया विफलत्वमाह-

शिक्षाहीनस्य नटवल्, लिङ्गमात्मविडम्बनम् ।
अविनीतस्य शिक्षापि, खलमैत्रीव किल्फला ॥४५॥

पञ्चविधविनयमाह-

लोकानुवर्तनाहेतु,स्तथा कामार्थहेतुकः ।
विनयो भयहेतुश्च, पञ्चमो मोक्षसाधनः ॥४६॥

उत्थानमञ्जलिः पूजा, ऽतिथेरासनढौकनम् ।
देवपूजा च लोकानुवृत्ति कृद्विनयो मतः ॥४७॥

भाषाछन्दानुवृत्ति, च प्रदानं देशकालयोः ।
लोकानुवृत्तिरर्थाय, विनयश्चाञ्जलिक्रिया ॥४८॥

कामतन्त्रे भये चैव, ह्येवं विनय इष्यते ।
विनयः पञ्चमो यस्तु, तस्यैषा स्यात् प्ररूपणा ॥४९॥

लोकात्नुवृत्तिकामार्थ-,भयनिःश्रेयसाश्रयः ।
विनयः पञ्चधाऽवश्य-कार्योऽन्त्यो निर्जरार्थिभिः ॥५०॥

मोक्षाश्रयविनयभेदान् प्राह-

दर्शनज्ञानचारित्र-गोचरश्चौपचारिकः ।
चतुर्धा विनयोऽवाचि, पञ्चमोऽपि तपो गतः ॥५१॥

दर्शनविनयमाह-

उपबृंहादितात्मयं, भक्त्यादिकरणोद्यमः ।
सम्यक्त्वविनयो ज्ञेयः, शङ्कादीनां च वर्जनम् ॥५२॥
दर्शनविनयः शङ्का-द्यसन्निधि सोपगूहनादिविधिः ।
भक्त्यर्चावर्णावर्णहृत्यनासादनाजिनादिषु च ॥५३॥

दर्शनविनयाद् दर्शनाचारस्य को विशेष इति प्रश्ने सति समाधानं व्याचष्टे

दोषोच्छेदे गुणाधाने, यत्नो हि विनयो दृशि ।
दृगाचारस्तु तत्त्वार्थ-रुचौ यत्नो मलात्यये ॥५४॥

ज्ञानविनयमाह-

ज्ञानीयो विनयः काले, विनयेऽवग्रहे मतः ।
बहुमानेऽनपह्नुत्यां व्यञ्जने, ऽर्थे द्वयेऽष्टधा ॥५५॥
प्रश्रयाधिकतया श्रुतस्य वै, श्रेयसां च विभवस्य भाजनं
संभवन्ति मनुजाः प्रसन्नताम्, एत्यतो भव भवे सरस्वती

शुद्धव्यञ्जनवाच्य तद्द्वयतया, गुर्वादिनामाख्यया,
योग्यावग्रहधारणेन समये, तद्भाजि भक्त्यापि च ।
यत्काले विहिते कृताञ्जलिपुटस्याऽव्यग्रबुद्धेः शुचेः,
सच्छास्त्राध्ययनं स बोधविनयः, साध्योऽष्टधापोष्टदः ॥
ज्ञानविनयाज्ज्ञानाचारस्य को भेद इति पृच्छन्त प्रत्याह
यत्नो हि कालशुद्ध्यादौ स्याज्ज्ञानविनयोऽत्र तु ।
सति यत्नस्तदाचारः, पाठे तत्साधनेषु च ॥५८॥

चारित्रविनय निगदति

कुर्वतः समिती गुप्तीः, प्रणिधानस्य वर्जनम् ।
चारित्रविनयः साधो जायते सिद्धिसाधकः ॥५९॥
रम्याऽरम्यहृषीकगोचररति-द्वेषोज्झनेनोच्छलन्,
क्रोधादिच्छिदयाऽसकृत्समितिषूद्योगेन गुप्त्यास्थया ।
सामान्येतरभावनापरिचयेनापि व्रतान्युद्धरन्:
धन्यःसाधयते चरित्रविनयं, श्रेयःश्रियः पारयं ॥६०॥
चारित्रविनयाच्चारित्राचारस्य को विशेष इति प्रश्ने सति व्याचष्टे
समित्यादिषु यत्नो हि, चारित्रविनयो मतः ।
तदाचारस्तु यस्तेषु, सत्सु यत्नो व्रताश्रयः ॥६१॥

प्राणिधानसेयमाह–

प्रणिधानं द्विधा प्रोक्त–मिन्द्रियानिन्द्रियाश्रयम् ।
शब्दादिविषयं पूर्वं, परं मानादिगोचरम् ॥६२॥
उक्तं शब्दे रसे रूपे, स्पर्शे गन्धे शुभेऽशुभे ।
रागद्वेषविधानं यत्, तदाद्यं प्रणिधानकम् ॥६३॥

मनः प्रणिधानमाह–

मानमायामदक्रोध, लोभमोहादिकल्पनम् ।
अनिन्द्रियाश्रयं ज्ञेयं, प्रणिधानमनेकधा ॥६४॥

तपोविनयं कथयति

तपस्तपोऽधिके भक्तिर्यच्छेषाणामहेडनं ।
स तपो विनयोऽवाचि ग्रन्थोक्तं चरतो यतेः ॥६५॥

यथोक्तमावश्यकमावहन् सहन्,
परीषहानग्रगुणेषु चोत्सहन् ।
भजंस्तपोवृद्धतपांस्यहेलयन् ,
तपोलघूनेति तपो विनीतताम् ॥६६॥

औपचारिकविनयभेदान् प्राह–

कायिको वाचिकश्चेतः पञ्चमो विनयस्त्रिधा ।
सर्वोऽप्यसौ पुनर्द्वेधा, प्रत्यक्षेतरभेदतः ॥६७॥

प्रत्यक्षकायिकविनयमाह–

संभ्रमो नमनं सूरेः, कृतिकर्माञ्जलिक्रिया ।
सम्मुखं यानमायाति, यात्यनुव्रजनं पुनः ॥६८॥
अभ्युत्थानोचितवितरणोच्चासनाद्युज्झनानु-
व्रज्या पीठाद्युपनयविधिः कालभावाङ्गयोग्यः ।
कृत्याचारः प्रणतिरिति चाङ्गेन सप्त प्रकाराः,
कार्यः साक्षाद् गुरुषु विनयः सिद्धिकामैस्तुरीयः ॥६९॥
नीचं यानमवस्थानं, नीचं शयनमासनं
प्रदानमवकाशस्य, विष्टरस्योपकारिणः ॥७०॥
देशकालवयोभाव–धर्मयोग्यक्रियाकृतिः ।
करणं प्रेषणादीना–मुपधेः प्रतिलेखनम् ॥७१॥
व्यापारः क्रियते नित्यं, यः कालेनैवमादिकः ।
कायिको विनयोऽवाचि, साधूनां स यथोचितः ॥७२॥

प्रत्यक्षवाचिकविनयमाह–

पूजासम्पादकं वाक्य–मनिष्ठुरमकर्कशम् ।
अक्रियावर्णकं श्रव्यं, सत्यं सूत्रानुवीचिकं ॥७३॥
हितं मितं परिमितं, वचः सूत्रानुवीचि च ।
ब्रुवन् पूज्यांश्चतुर्भेद, वाचिकं विनयं भजेत् ॥७४॥
उपशान्तमगार्हस्थ्यं, हितं मितमहेडनम् ।

योगिनो भावमालस्य, विनयोऽवाचि वाचिकम् ॥७५॥

मानसिकविनयमाह-

हितप्रियपरीणामं, विदधानस्य मानसः ।
पापास्रवपरीणामं, मुञ्चतो विनयो मतः ॥७६॥

निरुन्धन्नशुभं भावं, कुर्वन् प्रियहिते मतिम् ।
आचार्यैरवाप्नोति, मानसं विनयं द्विधा ॥७७॥

वाङ्मनस्तनुभिः स्तोत्रस्मृत्यञ्जलिपुटादिकम् ।
परोक्षेष्वपि पूज्येषु, विदध्याद्विनयं त्रिधा ॥७८॥

एव त्रिप्रकार प्रत्यक्षविनयं निरूप्य परोक्षविनयं प्राह-

इत्ययं विनयोऽध्यक्षः, परोक्षः, स मतो गुरोः ।
अप्रत्यक्षेऽपि या वृत्ति-राज्ञानिर्देशचर्ययोः ॥७९॥

संयतानां गृहस्थानां, आर्यिकाणां यथायथम् ।
विनयः सर्वदा कार्यः, संसारान्तं यियासुभिः ॥८०॥

विनयफलमाह-

विमुक्तिः साध्यते येन, श्रामण्यं येन वर्धते ।
सूरिराराध्यते येन, येन संघः प्रसाद्यते ॥८१॥

कल्याचारपरिज्ञानं, दीपनं मानभञ्जनं ।
आत्मशुद्धिरवैचित्यं, मैत्रीमार्दवमार्जवम् ॥८२॥

भक्तिः प्राल्हादनं कीर्ति, लाँघवं गुरुगौरवम् ।
जिनेन्द्राज्ञा गुणश्रद्धा, गुणा वैनयिका मता: ॥८३॥
समस्ताः सम्पदः सद्यो, विधाय वशवर्तिनीः ।
चिन्तामणि रिवाभीष्टं, विनयः कुरुते न किम् ॥८४॥
विनयं न विना ज्ञानं, दर्शनं चारित्रं तपः ।
कारणेन विना कार्यं, जायते कुत्र कथ्यताम् ॥८५॥
विनयेन विना तेन, निर्वृतिं यो यियासति ।
तरण्डेन विना मन्ये, स तितीर्षति वारिधिम् ॥८६॥
ज्ञानलाभार्थमाचार,-विशुद्ध्यर्थं शिवार्थिमः ।
आराधनादिसंसिद्ध्यै, कार्यं विनयभावनम् ॥८७॥
चित्रीयते त्रिजगती च वशीभवन्ति ।
देवादयोऽपि रिपवोऽप्यनुगा भवन्ति ।
यस्याः श्रियोऽप्युपनता, जगतां दुरापा,
ज्ञानादिपञ्चसु विनीतिरियमं तनोतु ॥८८॥
द्वारं यः सुगते र्गणेशगणयो:, कार्मणं यस्तपो,
वृत्तज्ञानऋजुत्वमार्दवयशः. सौचित्यरत्नार्णवः ।
यः क्लेशदवाम्बुदः श्रुतगुरुद्योतैकदीपश्च यः,
स क्षेप्यो विनयः परं, जगदिनाज्ञापारवश्येन चेत् ॥८९॥

इत्यभ्यन्तरविनयतपोवर्णनम्

वैयावृत्याभ्यन्तरतपो व्याचष्टे-

१ *आचार्यः*—व्रतान्याचरन्त्यस्मादित्याचार्यः

आचार्याध्यापकादीनां, वैयावृत्यमनिन्दितं ।
दशधाऽमाणि सूत्रज्ञै, र्बहुधा पुण्यकारकम् ॥९०॥
स्वयं चरन्ति एवास्मिन्, अन्यानाचारयन्ति ये ।
पञ्चधाऽनेकधाचार–माचार्यास्ते भवन्त्यमी ॥९१॥
पञ्चधा चरन्त्याचारं, शिष्यानाचारयन्ति च ।
सर्वशास्त्रविदो धीरास्तेऽत्राचार्याः प्रकीर्तिताः ॥९२॥
रूपाम्नायगुणैराढ्यो यतीनां मान्य एव च ।
तपोज्येष्ठो गुरुश्रेष्ठो, विज्ञेयो गणनायकः ॥९३॥

वैयावृत्यलक्षणमाह

क्लेशसंक्लेशनाशाया-चार्यादिदशकस्य यः ।
व्यावृत्तस्तस्य यत्कर्म, तद्वैयावृत्यमाचरेत् ॥९४॥

क्व क्व वैयावृत्यं कुर्यादित्याह-

शय्यायामासने चोप-गृहीते पठने तथा ।
आहारे चौषधे काये, मलोज्झोत्थापनादिषु ॥९५॥
मारी दुर्भिक्षचोराध्व-व्यालराजनदीषु च ।
वैयावृत्यं यतेरुक्तं सपरिग्रहरक्षणम् ॥९६॥

"दीक्षाचार्यस्य या शिष्यसन्ततिस्तत्कुलं मतम्"

संघः—ऋषिमुनियत्यनगारलक्षणश्चातुर्वर्णश्रमणसमूहः संघो निगद्यते।

"श्रमणानां चतुर्वर्णानां समुदायः संघ उच्यते"

यो वचःकायचित्तेन, स्यादिन्द्रियनिरोधकः।
कषायविषयातीतः, स ऋषिः परिकथ्यते ॥३॥

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।
वीतरागभयक्रोधः, स्थिरधी मुनि रुच्यते ॥४॥

अण्डजबुण्डजरोमज,—चर्मजवल्कलज पञ्च चेलानि।
परिहृत्य गगनचेलं, यो गृह्णीयाद् भवेत् स यतिः ॥५॥

न व्याप्यते महात्मा यो, मोहनीयेन कर्मणा।
कायक्लेशपरो नित्य—मनगारः स उच्यते ॥६॥

अपूर्वनिजात्मोत्थशर्मणे, यतन्ते ये ते यतयः।

साधुः—चिरदीक्षितोऽनगारः साधु प्रोच्यते,

धर्मादेशं न कुर्वन्ति, परेभ्यो वितरन्ति न।
ये दीक्षामात्मनः सिद्धिं, साधयन्तीति साधवः ॥७॥

*मनोज्ञः*—वक्तृत्वादिगुणविराजितो लोकसम्मतो विद्वान् मुनिः मनोज्ञः निरूप्यते।

लोकानां सम्मतो यस्तु, मनोज्ञः स निगद्यते।

वाचना कथ्यते ॥१॥

*नन्दा:*—पूर्वपक्षीकृतपरदर्शनादि निराकृत्य स्वपक्षस्थापिका व्याख्या नन्दा वाचना निरूप्यते ॥२॥

*भद्रा:*—तन्त्रयुक्तिभिः प्रत्यवस्थाय पूर्वापरविरोधपरिहारेण तन्त्रस्याऽशेषार्थव्याख्या भद्रा वाचना उच्यते ॥३॥

*सौम्या.*—क्वचित् क्वचित् स्खलितवृत्त्यर्थाख्या सौम्या वाचना निगद्यते ॥४॥

*पृच्छना*—शास्त्रार्थम् जानन्नपि सन्देहविनाशाय बलाधाननिमित्तं ग्रन्थार्थप्रबलतानिमित्तं पुनः पृच्छ्यते सा पृच्छना ।

प्रच्छनं संशयोच्छित्त्यै, निश्चितदृढनाय वा ।
प्रश्नोऽधीतिप्रवृत्त्यर्थ-त्वादधीतिरसावपि ॥१८॥

*आम्नाय:*—अष्टस्थानोच्चारणविशेषेण यच्छुद्धघोषणं पुनः पुनः प्रवर्तन स आम्नायः ।

परिघोषविशुद्धं यत्, परिवर्तनमुत्तमं ।
तदाम्नाय इति प्राज्ञाः, कथयन्ति यतीश्वराः ॥१९॥
"आम्नायो घोषशुद्धं यद्, वृत्तस्य परिवर्तनम्"

*अनुप्रेक्षा*—परिज्ञातार्थस्यैकाग्रेण चेतसा यत् पुनः पुनरभ्यसनमनुप्रेक्षा

साधोरधिगतार्थस्य, योऽभ्यासो मनसा भवेत् ।
अनुप्रेक्षेति निर्दिष्टः स्वाध्यायः स जिनेशिभिः ॥२०॥
साऽनुप्रेक्षा यदभ्यासोऽधिगतार्थस्य चेतसा ।

स्वाध्यायलक्ष्म पाठोऽन्त-र्जल्पात्माऽत्रापि विद्यते ॥२१॥

धर्मोपदेशः—दृष्टादृष्टप्रयोजनमनपेक्ष्योन्मार्गसन्देहविनाशार्थम् केवलमात्मश्रेयोऽर्थम् महापुराणादिधर्मकथाद्यनुकथनं धर्मोपदेशः।

महाधर्मकथानां यत्, प्रख्यापनमनारतं।

धर्माख्यानं मतं तद्धि, संसारासातशातनम् ॥२२॥

"कथाधर्माद्यनुष्ठानं विज्ञेया धर्मदेशना"

धर्मं केऽपि विदन्ति तत्र धुनते, सन्देहमन्येऽपरे,

तद्भ्रान्तेरपयन्ति सुष्ठु, तमुशन्त्युऽन्येऽनुतिष्ठन्ति ।

श्रोतारो यदनुग्रहाद्वहरहर्वक्ता तु रत्नत्रयं,

विश्वक् निर्जरयंश्च नन्दति शुभैः सा नन्द्यताद् देशना ॥

धर्मकथायाश्चातुर्विध्यं दर्शयन्नाह

आक्षेपणीं स्वमतसंग्रहणीं समेक्षी,

विक्षेपणीं कुमतनिग्रहणीं यथार्हम् ।

संवेजनीं प्रथयितुं सुकृतानुभावं,

निर्वेदनीं वदतु, धर्मकथां विरक्त्यै ॥२४॥

चतुर्णामनुयोगानां, त्रिलोकानां यथार्थतः ।

अध्यापनमधीतिर्वा, स्वाध्यायः कथ्यते हि सः ॥२५॥

सर्वेभ्योऽपि व्रतेभ्योऽत्र, स्वाध्यायः परमं तपः ।

यतः सर्वव्रतानां हि, स्वाध्यायो, मूलमाहितः ॥२६॥

स्वाध्यायफलमाह-

स्वाध्यायाज्जायते ज्ञानं, ज्ञानात् तत्त्वार्थसंग्रहः ।
तत्त्वार्थसंग्रहादेव, श्रद्धानं तत्त्वगोचरम् ॥२७॥
तत्त्वश्रद्धानतः पूर्वं, तथाराधनलक्षणं ।
चारित्रं जायते तस्मिन्, त्रयीमूलमयं मतम् ॥२८॥
प्रशस्ताध्यवसायस्य, स्वाध्यायो वृद्धिकारणम् ।
तेनेह प्राणिनां नित्यं, सञ्चितं कर्म नश्यति ॥२९॥
संवेगो जायते यस्मात्, मोहध्वान्तविनाशकः ।
मोहावपन्नतानां हि, क्व संसारः क्व तत्फलम् ॥३०॥
तपोवृद्धिकरश्चासौ, स्वाध्यायः शुद्धमानसैः ।
कथ्यतेऽनेकधा ताव-दतीचारविशुद्धितः ॥३१॥
चित्तमर्थनिलीनं स्यात्, चक्षुरक्षरपङ्क्तिषु ।
पत्रेऽस्य संयमः सम्यक् स्वाध्यायः क्रियते [illegible] ॥३२॥
स्वाध्यायेन समं किञ्चिद्, न कर्मक्षपणक्षमं ।
यस्य संयोगमात्रेण, जातो मुक्तो [illegible] ॥३३॥
सर्वज्ञाज्ञाविदो धीरस्, [illegible] कुर्वतः ।
स्वाध्यायं तत्क्षणाच्छुद्धेः, [illegible] ॥३५॥

स्वाध्यायसाध्यान्यभिधत्ते

प्रज्ञोत्कर्षजुषः श्रुतिस्थितिपुषश्चेतोऽघसंज्ञामुषः ।
सन्देहच्छिदुराः कषायभिदुराः प्रोद्यत्तपोमेदुराः,
संवेगोल्लसिताः सदध्यवसिताः, सर्वातिचारोज्झिताः ।
स्वाध्यायात् परवाद्यशङ्कितधियः स्युः शासनोद्भासिनः ॥

अथ व्युत्सर्गाभ्यन्तरतपोभेदं तद्भावनां चाह-

उत्सृज्य कायकर्माणि भावं च भवकारणं ।
स्वात्माऽवस्थानमव्यग्रं, कायोत्सर्गः स उच्यते ॥३६॥

२ बाह्यो भक्तादि १ रुपधिः, क्रोधादि ३ रभ्यान्तरस्तयोः ।
त्यागं व्युत्सर्गमस्वन्तं, मितकालं च भावयेत् ॥३७॥

१ परिग्रहः २ बहिर्भवो बाह्यः, आत्मान अनुपात्तः, तेन सह एकत्वमनापन्न इत्यर्थः ३ अन्तर्भवः आन्तरः आत्मना उपात्तः तेन सह एकत्वमापन्न इत्यर्थः ।

व्युत्सर्गशब्दस्य निरुक्त्यर्थम् व्यनक्ति-

बाह्याभ्यन्तरदोषा ये, विविधा बन्धहेतवः ।
यस्तेषामुत्तमः सर्गः, स व्युत्सर्गो निरुच्यते ॥३८॥

बाह्यान्तरोपधित्यागाद्, व्युत्सर्गो द्विविधो भवेत् ।
क्षेत्रादिरुपधिर्बाह्यः, क्रोधादिरपरः पुनः ॥३९॥

व्युत्सर्गस्वामिनं निर्दिशति-

देहाद् विविक्तमात्मानं, पश्यन् गुप्तित्रयीं श्रितः ।
स्वाङ्गेऽपि निःस्पृहो योगी, व्युत्सर्गं भजते परम् ॥४०॥

प्रकारान्तरेणान्तरङ्गोपधिव्युत्सर्गमाह–

कायत्यागश्चान्तरङ्गो–पधिव्युत्सर्ग इष्यते ।
स द्वेधा नियतानेहा, सार्वकालिक इत्यपि ॥४१॥

परिमितकालकायोत्सर्गस्य द्वौ भेदावाह–

तत्राऽप्याद्यः पुनर्द्वेधः–नित्यो नैमित्तिकस्तथा ।
आवश्यकादिको नित्यः, पर्वकृत्यादिकः परः ॥४२॥

प्राणान्तिककायत्यागस्य त्रैविध्यमाह–

भक्तत्यागेङ्गिनी प्रायो–पयानमरणैस्त्रिधा ।
यावज्जीवं तनुत्यागस्तत्राद्योऽर्हादिभावभाक् ॥४३॥

कायोत्सर्गभेदान् प्राह–

प्रालम्बितभुजः पादान्तरश्चतुः स्वाङ्गुलाश्रितः ।
सर्वाङ्गचलनातीतः, कथ्यतेऽत्र चतुर्विधः ॥४४॥
उत्थितोत्थितनामो–त्थितोपविष्टसमाह्वयः ।
उपविष्टोत्थिताख्यः, किलासीनासीनसंज्ञकः ॥४५॥
एतैः शुभाशुभैर्भेदैः, कायोत्सर्गश्चतुर्विधः ।
द्विधा त्याज्यो द्विधः, ग्राह्यस्तेषां मध्ये स योगिभिः ॥

व्युत्सर्गतपसः फलमाह–

नैःसङ्ग्यं जीविताशान्तो, निर्भयं दोषविच्छिदा ।
स्याद् व्युत्सर्गात् शिवोपाय–भावनातत्परताऽपि च ॥४६॥

## दुर्ध्यानभेदमाह

"आर्तरौद्रविकल्पेन, दुर्ध्यानं देहिनां द्विधा"

"स्यातामत्रार्तरौद्रे द्वे, दुर्ध्याने ऽत्यन्तदुःखदे"

आर्तध्याननिरुक्तिमाह–

ऋते भवमथार्तं स्यात्, असद्ध्यानं शरीरिणां"

आर्तध्यानभेदमाह–

अनिष्टयोगजन्माद्यं, तथेष्टार्थात्ययात् परम् ।

रुक्प्रकोपात् तृतीयं स्यात्, निदानात् तुर्यमङ्गिनाम ॥१॥

प्रथमार्तध्यानमाह–

तथा चरस्थिरैर्भावै,–रनेकैः समुपस्थितैः ।

अनिष्टै र्यन्मनःक्लिष्टं, स्यादार्तं तत्प्रकीर्तितम् ॥२॥

श्रुतैर्दृष्टैः स्मृतै र्ज्ञातैः, प्रत्यासत्ति च संश्रितैः ।

योऽनिष्टार्थैर्मनःक्लेशः, पूर्वमार्तं तदिष्यते ॥३॥

अशेषानिष्टसंयोगे, तद्वियोगानुचिन्तनम् ।

यत्स्यात्तदपि तत्त्वज्ञैः, पूर्वमार्तं प्रकीर्तितम् ॥४॥

अथद्वितीयार्तध्यानमाह–

मनोज्ञवस्तुविध्वंसे, मनस्तत्सङ्गमार्थिभिः ।

क्लिश्यते यत्तदेतत् स्यात्, द्वितीयार्तस्य लक्षणम् ॥५॥

दृष्टश्रुतानुभूतैस्तैः, पदार्थैश्चित्तरञ्जकैः ।
वियोगे यन्मनःखिन्नं, स्यादार्तं तद्द्वितीयकम् ॥६॥

तृतीयार्तध्यानमाह-

वातपित्तादिसंभूत-विकाराणां समागमे ।
तस्यापाये विकल्पो य, स्तृतीयं समुदाहृतम् ॥७॥
स्वल्पानामपि रोगाणां, मा भूत् स्वप्नेऽपि संभवः ।
ममेति या नृणां चिन्ता, स्यादार्तं तत्तृतीयकम् ॥८॥

चतुर्थार्तध्यानमाह-

इष्टभोगादिसिद्ध्यर्थं, रिपुघातार्थमेव वा ।
यन्निदानं मनुष्याणां, स्यादार्तं तत्तुरीयकम् ॥९॥
पुण्यानुष्ठानजातैरभिलषति पदं, यज्जिनेन्द्रामराणां,
यद्वा तैरेव वांछत्यहितकुलकुज-च्छेदमत्यन्तकोप तु ।
पूजासत्कारलाभप्रभृतिक मथवा, याचते यद्विकल्पैः
स्यादार्तं तन्निदानप्रभवमिह नृणां, दुःखदावोग्रधाम ॥१०॥
तपश्चारित्रदानार्चा-धर्मध्यानादिकान् बहून् ।
कृत्वा तेषां फलेनात्र, पुत्रनार्यादिसम्पदाम् ॥११॥
अमुत्र स्वर्गराज्यादि-भोगानां, स्वस्य रागिभिः ।
आकाङ्क्षाकरणं यत्तद्, आर्तं निदाननामकम् ॥१२॥

उत्कृष्टं ध्यानमेतद् गुणस्थाने प्रथमे भवेत् ।
प्रमत्ताख्ये जघन्यं च, तयोर्मध्येषु मध्यमम् ॥१३॥
विश्वसंक्लेशसम्पूर्णं, तिर्यग्गतिकरं फलं ।
अयत्नजनितं चैतत्, नृणां दुःखविधायकम् ॥१४॥

आर्तध्यानस्य बाह्यचिन्हानि प्राह-

शङ्काशोकभयप्रमादकलह, श्चित्तभ्रमोद्भ्रान्तयः,
उन्मादो विषयोत्सुकत्व,-मसकृन्निद्राङ्गजाड्यश्रमाः ।
मूर्च्छादीनि शरीरिणामविरतं, लिङ्गानि बाह्यान्यलं,
आर्ताधिष्ठितचेतसा श्रुतधरैर्व्यावर्णितानि स्फुटम् ॥१५॥
समाधिधर्मशुक्लादि-हतृदुर्ध्यानमञ्जसा ।
त्यजन्तु दुस्त्यजं दक्षा, धर्मध्यानबलात् सदा ॥१६॥
त्रिदुर्लेश्याबलाधान-मन्तर्मुहूर्तकालकम् ।
क्षयोपशमिको भावो, दुष्प्रमादावलम्बनम् ॥१७॥

अथरौद्रध्यानमाह-

रुद्रः क्रूराशयः प्राणी, प्रणीतस्तत्त्वदर्शिभिः ।
रुद्रस्य कर्म भावो वा, रौद्रमित्यभिधीयते ॥१८॥
हिंसानन्दात् मृषानन्दाच्चौर्यात् संरक्षणात्तथा ।
प्रभवत्यङ्गिनां शश्व-दपि रौद्रं चतुर्विधम् ॥१९॥

अस्य घातो जयोऽन्यस्य, समरे जायतामिति ।
स्मरत्यङ्गी तदध्याहू, रौद्रमध्यात्मवेदिनः ॥
हते निष्पीडिते ध्वस्ते, जन्तुजाते कदर्थिते ।
स्वेन चान्येन यो हर्षस्तद्धिसारौद्रमुच्यते ॥२१॥
श्रुते दृष्टे स्मृते जन्तुवधाद्युरुपराभवे ।
यो हर्षस्तद्धि विज्ञेयं, रौद्रं दुःखानलेन्धनम् ॥२२॥
हिंसाकर्मणि कौशलं निपुणता, पापोपदेशे भृशं,
दाक्ष्यं नास्तिकशासने प्रतिदिनं, प्राणातिपाते रतिः ।
संवासः सह निर्दयैरविरतं, नैसर्गिकी क्रूरता,
यत्स्याद् देहभृतां तदत्र गदितं, रौद्रं प्रशान्ताशयैः ॥२३॥
हिंसोपकरणादानं, क्रूरसत्वेष्वनुग्रहः ।
निस्त्रिंशतादिलिङ्गानि, रौद्रे बाह्यानि देहिनः ॥२४॥
"अहं कदा करिष्यामि, पूर्ववैरस्य निष्क्रयम्"
"किं कुर्मः शक्तिवैकल्याज्, जीवन्त्यद्यापि विद्विषः"

मृषानन्दरौद्रध्यानमाह

असत्यकल्पनाजाल—कश्मलीकृतमानसः ।
चेष्टते यज्जनस्तद्धि, मृषारौद्रं प्रकीर्तितम् ॥२५॥

विधाय वञ्चकं शास्त्रं, मार्गमुद्दिश्य निर्दयम् ।
प्रपात्य व्यसने लोकं, भोक्ष्येऽहं वाञ्छितं सुखम् ॥२६॥
असत्यसामर्थ्यवशादरातीन्, नृपेण वान्येन च घातयामि ।
अदोषिणां दोषचयं विधाय, चिन्तेति रौद्राय मता मुनीन्द्रैः ॥
अनेकासत्यसकल्पैः यः, प्रमोदः प्रजायते ।
मृषानन्दात्मकं रौद्रं, तत्प्रणीतं पुरातनैः ॥२८॥

चौर्यानन्दरौद्रध्यानमाह-

चौर्योपदेशबाहुल्यं, चातुर्यं चौर्यकर्मणि ।
यच्चौर्यैकपरं चेत, स्तच्चौर्यानन्द इष्यते ॥२९॥
यच्चौर्याय शरीरिणामहरहश्चिन्ता, समुत्पद्यते,
कृत्वा चौर्यमपि प्रमोदमतुलं, कुर्वन्ति यत्संततम्
चौर्येणापि हृते परैः, परधने यज्जायते संभ्रमः,
तच्चौर्यप्रभवं वदन्ति निपुणा, रौद्रं सुनिन्दास्पदम् ॥

विषयसंरक्षणानन्दरौद्रध्यानमाह

गन्धरूपरसस्पर्श-शब्दसंरक्षणाय च ।
क्रूरभावे मनोरोधश्चतुर्थं, रौद्रमुच्यते ॥३१॥
मदीया वस्तुसाम्राज्य-रामासेनादिसम्पदः ।
यो हरेत्तं दुरात्मानं, हन्मि पौरुषयोगतः ॥३२॥

इतिस्ववस्तुरक्षायां, संकल्पकरणं हृदि ।
दुर्धियां तत्समस्तं विषयसंरक्षणाभिधम् ॥३३॥
ध्येयं लोकत्रयोद्भूतं रौद्रवस्तुकदम्बकम् ।
रौद्रस्तीव्रकषायी स्यात्, भवी स्यात् पञ्चलोचनः ॥३४॥
अनन्तदुःखसन्तापं, पूरितं नरकप्रदम् ।
बहुसागरपर्यन्तं, फलमस्य दुरात्मनाम् ॥३५॥
आदिमे च गुणस्थानेऽत्र, उत्कृष्टमञ्जसा ।
जघन्यं पञ्चमेषु स्यात्, द्वित्रिचतुर्थे च मध्यमम् ॥३६॥

रौद्रध्यानस्यबाह्यचिन्हानि प्राह–

विस्फुलिङ्गनिभे नेत्रे, भ्रू वक्रा भीषणाकृतिः ।
कम्पः स्वेदादिलिङ्गानि, रौद्रे बाह्यानि देहिनाम् ॥३७॥
क्रूरता दण्डपारुष्यं, वञ्चकत्वं कठोरता ।
निस्त्रिंशत्वं च लिङ्गानि रौद्रस्योक्तानि सूरिभिः ॥

रौद्रध्यानस्याभ्यन्तरचिन्हानिप्राह–

अभिलषति नितान्तं, यत्परस्यापकारं,
व्यसनविशिखभिन्नं, वीक्ष्य यत्तोषमेति ।
यदिह गुणगरिष्ठं द्वेष्टि, दृष्ट्वाऽन्यभूतिं,
भवति हृदि सशल्यस्तद्धि रौद्रस्य लिङ्गम् ॥४०॥

रौद्रकर्म भवं रौद्रं, कर्मभावनिबन्धनं ।
रौद्रदुःखकरं रौद्र-गतिदं रौद्रयोगजम् ॥४१॥
रौद्रपापारिसन्तानं, रौद्रं ध्यानं चतुर्विधं ।
त्याज्यं सर्वत्र यत्नेन, धर्मध्यानेन धर्मिभिः ॥४२॥

दुर्ध्यानलक्षण एवं फलं चाह-

संयोगे विप्रलम्भे च, निदाने परिवेदने ।
हिंसायामनृते स्तेये, भोगरक्षासु तत्परे ॥४३॥
जन्तोरनन्तसंसार, भ्रमणोरथवर्त्मनी ।
आर्तरौद्रे त्यजेद् ध्याने, दुरन्तफलदायिनी ॥४४॥
बोध्यागमकपाटे ते, मुक्तिमार्गार्गले परे ।
सोपाने श्वभ्रलोकस्य, तत्त्वेक्षावृतिपक्ष्मणी ॥४५॥
लेशतोऽपि मनो यावद्, देते समधिनिष्ठतः ।
एष जन्मतरुस्तावद्-दुर्ध्यः समधिरोहति ॥४६॥
स्वयमेव प्रजायन्ते, विना यत्नेन देहिनाम् ।
अनादिदृढसंस्काराद्, दुर्ध्यानानि प्रतिक्षणम् ॥४७॥
वहत्येव क्षणार्धेन, देहिनामिव स्थितं ।
असद्ध्यानं त्रिलोकश्री-प्रसवं धर्मपादपम् ॥४८॥

## प्रशस्तध्यानलक्षणमाह

पुण्याशयवशाज्जातं, शुद्धलेश्यावलम्बनात् ।
चिन्तनाद् वस्तुतत्त्वस्य, प्रशस्तं ध्यानमुच्यते ॥१॥
अस्तरागो मुनिर्यत्र, वस्तुतत्त्वं विचिन्तयेत् ।
तत्प्रशस्तं मतं ध्यानं, सूरिभिः क्षीणकल्मषैः ॥२॥
वीतरागो भवन् योगी, यच्च किञ्चिद् विचिन्तयेत् ।
तदेव ध्यानमाम्नात-मुतोऽन्ये ग्रन्थविस्तरः ॥३॥
उत्कृष्टकायबन्धस्य, साधोरन्तर्मुहूर्ततः ।
ध्यानमाहुरथैकाग्र-चिन्तारोधो बुधोत्तमाः ॥४॥
" वदन्ति योगिनो ध्यानं, चित्तमेवमनाकुलं"
साधुसंहननस्येह, यदेकाग्रनिरोधनं ।
चित्तस्यान्तर्मुहूर्तं स्याद्, ध्यानमाहु र्मनीषिणः ॥५॥
सद्दृष्टिज्ञानवृत्तानि, धर्मं धर्मेश्वरा विदुः ।
तस्माद् यदनपेतं हि, धर्म्यं तद् ध्यानमभ्यधुः ॥६॥
यश्चोत्तमक्षमादिः स्याद्, धर्मो दशतयः परः ।
ततोऽनपेतं यद् ध्यानं, तद्वा धर्म्यमितीरितम् ॥७॥
आत्मनः परिणामो यो, मोहक्षोभविवर्जितः ।
स च धर्मोऽनपेतं यत्, तस्मात् तद्धर्म्यमित्यपि ॥८॥

ततोऽनपेतं यज्ज्ञानं, तद्धर्म्यंध्यानमिष्यते ।
धर्मो हि वस्तुयाथात्म्यमित्यार्षेऽप्यभिधानतः ॥९॥

ध्यानशब्दनिरुक्तिमाह–

ध्यायते येन तद्ध्यानं, यो ध्यायति स एव वा ।
यत्र वा ध्यायते यद्वा ध्याति, वा ध्यानमिष्यते ॥१०॥

ध्यानपर्यायशब्दान् प्राह–

योगो ध्यानं समाधिश्च, धीरोधः स्वान्तनिग्रहः ।
अन्तःसंलीनता चेति, तत्पर्यायाः स्मृता बुधैः ॥११॥

धर्म्यंध्यानयोग्यस्थानमाह–

सिद्धकूटे जिनागारे, कृत्रिमेऽकृत्रिमेऽपि वा ।
महर्द्धिकमहाधीरे; योगिसंसिद्धवाञ्छिते ॥१२॥
मनःप्रीतिप्रदे शस्ते, शङ्काकोलाहलच्युते ।
सर्वर्त्तुसुखदे रम्ये, सर्वोपद्रववर्जिते ॥१३॥
शून्यवेश्मन्यथ ग्रामे, भूगर्भे कदलीगृहे ।
पुरोपवनवेद्यन्ते, मण्डपे चैत्यपादपे ॥१४॥
यत्र रागादयो दोषा, प्रजस्रं यान्ति लाघवम् ।
तत्रैव वसतिः साध्वी, ध्यानकाले विशेषतः ॥१५॥
वर्षातपतुषाराधि, पवनासारवर्जिते ।

स्थाने जागर्त्य विश्रान्तं यमी जन्मार्त्तिशान्तये ॥१६॥
सिद्धक्षेत्रे महातीर्थे, पुराणपुरुषाश्रिते ।
कल्याणकलिते पुण्ये, ध्यानसिद्धिःप्रजायते ॥१७॥

धर्म्यध्याननिषिद्धस्थानमाह–

म्लेच्छाधमजनैर्जुष्टं, दुष्टभूपालपालितं ।
पाषण्डिमण्डलाक्रान्तं, महामिथ्यात्ववासितम् ॥१८॥
द्यूतकारसुरापान–विटवन्दिव्रजान्वितम् ।
पापिसत्त्वसमाक्रान्तं, नास्तिकासारसेवितं ॥१९॥
कौलिकापिलकावासं, रुद्रक्षुद्रादिमन्दिरम् ।
उद्भ्रान्तभूतवेतालं, चण्डिकाभवनाजिरम् ॥२०॥
क्रव्यादकामुकाकीर्णं, मन्दचारित्रमन्दिरम् ।
आत्रेयीखण्डितव्यङ्ग, संश्रितं परित्यजेत् ॥२१॥
विक्रीयते मनः सद्यः, स्थानदोषेण देहिनां ।
तदेव स्वस्थतां धत्ते, स्थानमासाद्य बन्धुरम् ॥२२॥
यत्राऽप्यमिन्द्रियग्रामो ध्यासङ्गस्तेनाविप्लवं ।
नाश्नुवीत तमुद्देशं, भजेताध्यात्मसिद्धये ॥२३॥

धर्मध्यानसाधनमाह–

वैराग्यं तत्त्वविज्ञानं, नैर्ग्रन्थ्यं समभावना ।

जयः परीषहाणां च, पञ्चैते ध्यानहेतवः ॥२४॥

शुभध्यानसामग्रीमाह–

सङ्गत्यागः कषायानां, निग्रहो व्रतधारणम् ।
मनोऽक्षाणां जय इचेति, सामग्री ध्यानजन्मनि ॥२५॥
१ वैराग्यं २ ज्ञानसम्पत्ति ३ रसङ्गः स्थिरचित्तता ।
ऊर्मिस्मयसहत्वं च, पञ्च योगस्य हेतवः ॥२६॥

१ विषये वैतृष्ण्यम् २ बन्धमोक्षोपायविवेकः ३ बाह्याभ्यन्तरपरिग्रहत्यागः

ध्यानबाधकसामग्रीमाह–

आधिव्याधिविपर्यास, प्रमादालस्यविभ्रमाः ।
अलाभः सङ्गिताऽस्थैर्य–मेते तस्यान्तरायकाः ॥२७॥

आधिः दौर्मनस्यं, व्याधिः दोषवैषम्य, विपर्यासः अतत्त्वे तत्त्वाभिनिवेश, प्रमाद तत्त्वावगमानादर, आलस्य लब्धस्यापि तत्त्वस्यानुष्ठानं, विभ्रमः तत्त्वातत्त्वयोः समा बुद्धि, अलाभः स्वपरयोरज्ञानात् आभ्यन्तरत्वाप्राप्तिः, सङ्गिता धनादिषु लुब्धता, सुखदु ख साधनोत्कर्षामर्षाभिनिवेश, अस्थैर्यम् चित्तस्यानैकाग्र्य ॥

धर्मध्यानचिन्हमाह–

शास्त्राभ्यासो भवेन्नित्यं, देवार्चागुरुवन्दनं ।
इत्थं प्रवर्तते यत्र, धर्मध्यानं तदुच्यते ॥२८॥

श्लोकपञ्चविंशते विवरणम्

यस्तु सङ्गपङ्कनिर्मग्नोऽप्यपवर्गाय चेष्टते
स पुमान् पुष्पनाराचैर्विभिन्द्यात् त्रिदशाचलः ॥२९॥
अणुमात्रादपि ग्रन्थात्, मोहग्रन्थिर्दृढीभवेत् ।
विसर्पति ततस्तृष्णा, यस्यां विश्वं न शान्तये ॥३०॥
तत्रासन्नीभवेन्मुक्तिः, किञ्चिदासाद्य कारणं ।
विरक्तः कामभोगेभ्यस्त्यक्तसर्वपरिग्रहः ॥३१॥
अभ्येत्य सम्यगाचार्यं, दीक्षां जैनेश्वरीं श्रितः ।
तपःसंयमसम्पन्नः, प्रमादरहिताशयः ॥३२॥

कषायनिग्रहमाह-

कषायै रञ्जितं चेतः, तत्त्वं नैवावगाहते ।
नीलीरक्तेऽम्बरे रागो, दुराधेयो हि कौङ्कुमः ॥३३॥
अनादिकालसंभूतः, कषायविषमग्रहः ।
स एवानन्तदुर्वार-दुःखसम्पादनक्षमः ॥३४॥
यत्र यत्र प्रसूयन्ते, तव कोपादयो द्विषः ।
तत्तत् प्रागेव मोक्तव्यं, वस्तु तत्सूतिशान्तये ॥३५॥
संयमोत्तमपीयूषं, सर्वाभिमतसिद्धिदं ।
कषायविषसेकोऽयं, निःसारीकुरुते क्षणात् ॥३६॥

त्रिलोकमल्लाः कुलशीलशत्रवः,
मलानि दुर्मोचतमानि चापि ते ।
यशोहरा हानिकरास्तपस्विनां,
भवन्ति दौर्भाग्यकरा हि देहिनां ॥३७॥
न केवलं ते परलोकलोपिनः,
इमं च लोकं क्षपयन्ति दारुणाः ।
न धर्ममात्रस्य च विघ्नहेतवः,
धनस्य कामस्य च ते विराधकाः ॥३८॥

क्षमया क्रोधकषायं, मानकषायं च मार्दवेनैव ।
मायामार्जवलाभात्, लोभकषायं च शौचतः जयतु ॥३९॥
स्वसंवित्ति समायाति, यमिनां तत्त्वमुत्तमं ।
आसमन्तात्छमं नीते, काषायविषमज्वरे ॥४०॥

मनोजयमाह–

एक एव मनोदैत्यः, सर्वार्थसिद्धिदः ।
अन्यत्र विफलः क्लेशो, यमिनां तज्जयं विना ॥४१॥
एक एव मनोरोधः, सर्वाभ्युदयसाधकः ।
यमेवालम्ब्य संप्राप्ता, योगिनः तत्त्वनिश्चयम् ॥४२॥
अत एतदेव संरुद्ध कुरु स्वाधीनमञ्जसा ।

यदि छेत्तुं समुद्युक्तः त्वं कर्मनिगडं दृढम् ॥४३॥
विलीनविषयं शान्तं, निःसङ्गस्त्यक्तविक्रियं ।
स्वस्थं कृत्वा मनः प्राप्तं, मुनिभिः पदमव्ययम् ॥४४॥
यदसाध्यं तपोनिष्ठै र्मुनिभि र्वीतमत्सरैः ।
तत्पदं प्राप्यते धीरै श्चित्तप्रसरबन्धकैः ॥४५॥
येनोपायेन शक्येत, सन्नियन्तु चलं मनः ।
स एवोपासनीयोऽत्र, न चैव विरमेत्ततः ॥४६॥
व्रतानि तस्य तिष्ठन्ति, तस्य सौख्यं निरन्तरं ।
सम्पदो विविधास्तस्य मनो यस्य च निश्चलम् ॥४७॥
जयार्थी गोचराणां, यः, स जयेत् प्राग् निजं मनः ।
नायके हि जिते सर्वा, पृतना विजिता भवेत् ॥४८॥
क्षीणरागं च्युतद्वेषं, ध्वस्तमोहं सुसंवृतं ।
यदि चेतः समापन्नं, तदा सिद्धं समीहितम् ॥४९॥
निःशेषविषयोत्तीर्णं, विकल्पव्रजवर्जितं ।
स्वतत्त्वैकपरं धत्ते, मनीषी नियतं मनः ॥५०॥
इदमिष्टमनिष्टं वेत्यात्मन्, संकल्पयन् मुधा ।
किन्नु मोमुह्यसे बाह्ये, स्वस्वान्तं स्ववशीकुरु

यस्य चित्तं स्थिरीभूतं, प्रसन्नं ज्ञानवासितं ।
सिद्धमेव मुनेस्तस्य साध्यं किं कायदण्डनैः ॥५२॥
यथोत्पाताक्षमः पक्षी लूनपक्षः प्रजायते ।
रागद्वेषच्छदच्छेदे, स्वान्तपत्ररथस्तथा ॥५३॥
रागादिपङ्कविश्लेषात्, प्रसन्ने चित्तवारिणि ।
परिस्फुरति निःशेषं मुनेर्वस्तुकदम्बकम् ॥५४॥
प्रयासैः फल्गुभिर्मूढ, किमात्मा दण्डयतेऽधिकं ।
शक्यते न हि चेच्चेतः, कर्तुम् रागादिवर्जितम् ॥५५॥
शमश्रुतयमोपेता, जिताक्षाः शंसितव्रताः ।
विदन्त्यनिर्जितस्वान्ताः, स्वस्वरूपे न योगिनः ॥५६॥
सद्यः पातालमेति प्रविशति जलधिं, गाहते देवगर्भं,
भुङ्क्ते भोगान् नराणांवर युवतिभिः, सङ्गमं याचते च ।
वाञ्छत्यैश्वर्यं रिपुसमितिहतेः, कीर्तिकान्तां ततश्च ।
धृत्वा त्वं जीव चित्तं स्थिरमतिचपलं, स्वस्थ कार्यं कुरुष्व ॥
दिक्चक्रं दैत्यधिष्ण्यं, त्रिदशपति पुराण्यम्बुवाहान्तरालं,
द्वीपाम्भोधि प्रकाण्डं खचरनरसुराहीन्द्रवासं समग्रं ।
एतत्त्रैलोक्यनीडं पवनचयचितं चापलेन क्षणार्धे,
नाश्रान्तं चित्तदैत्यो भ्रमति तनुमतां दुर्विचिन्त्यप्रभावः ॥

तितउ इव पानीयं, चारित्रं चलचेतसः ।
वचसा वपुषा सम्यक्, कुर्वतोऽपि पलायते ॥५९॥
तपःश्रुतयमज्ञान-तनुक्लेशादिसंश्रयम् ।
अनियन्त्रितचित्तस्य, स्यान् मुनेस्तुषखण्डनं ॥६०॥
विषयेषु यथा चित्तं जन्तोर्मग्नमनाकुलं ।
तथा यदि आत्मनस्तत्त्वे, सद्यः को न शिवोभवेत् ॥६१॥
अस्यानेके गुणाः सन्ति, कृते चित्तनिरोधने ।
श्रुतक्रीडावने स्वान्त-मर्कटं रमयत्वतः ॥६२॥

इन्द्रियजयमाह-

तावदेव पुरुषः सचेतनः, तावदाकलयति क्षमां परां ।
तावदुद्वहति मानमुत्तमं, यावदिन्द्रियवशं न गच्छति
अनिविद्धाक्षसन्दोहं, यः साक्षान् मोक्तुमिच्छति ।
विदारयति दुर्बुद्धिः, शिरसा स महीधरः ॥६४॥
हृषीकतस्करानीकं, चित्तदुर्गान्तराश्रितं ।
पुंसां विवेकमाणिक्यं, हरत्येवानिवारितम् ॥६५॥
संवृणोत्यक्षसैन्यं यः, कूर्मोऽङ्गानीव संयमी ।
स लोके दोषपङ्काढ्ये, चरन्नपि न लिप्यते ॥६६॥
ज्ञानवैराग्यरज्जुभ्यां, नित्यमुत्पथवर्तिनः ।
जितचित्तेन शक्यन्ते, धर्तुमिन्द्रियवाजिनः ॥६७॥

सौख्यं यदत्रविजितेन्द्रियशत्रुदर्पः,
प्राप्नोति पापरहितं, विगतान्तरायम् ।
स्वस्थं तदात्मकमनात्मधिया विलभ्यं,
किं तद् दुरन्तविषयानलतप्तचित्तः ॥६८॥

मीना मृत्युं प्रयाता रसनवशगता, दन्तिनः स्पर्शरुद्धा,
बद्धास्ते वारिबन्धे ज्वलनमुपगताः, पत्रिणश्चाक्षिदोषात् ।
भृङ्गा गन्धोद्धताशाः प्रलयमुपगता, गीतलोलाः कुरङ्गाः
कालव्यालेन दष्टास्तदपि तनुभृता—मिन्द्रियार्थेषु रागः ॥

निरुद्धबोधपाशेन क्षिप्ता वैराग्यपञ्जरे ।
हृषीकहरयो येन, स मुनीनां महेश्वरः ॥६९॥

शिवं दूरं भवेन्नात्र, जिताक्षस्य स्वसंविदः ।
नरनागसुरेन्द्राणां, पदं जीर्णतृणं यथा ॥७०॥

एकैकमक्षविषयं, भजताममीषां,
संपद्यते यदि कृतान्तगृहातिथित्वम् ।
पञ्चाक्षगोचरगतस्य किमस्ति वाच्यं,
प्रक्षार्थमित्यमलधीरधियस्त्यजन्ति ॥७१॥

प्रमाणनयनिक्षेपैः, सानुयोगं विशुद्धधीः ।
मतिं तनोति तत्त्वेषु, धर्मध्यानपरायणः ॥२८॥२

शुभध्यानफलमाह–

शुभध्यानफलोद्भूतां, श्रियं त्रिदशसंभवां ।
निर्विशन्ति नरा नाके, क्रमाद् यान्ति परं पदम् ॥७२॥

धर्मध्यानं च शुक्लं च, स्वीकृत्य निजवीर्यतः ।
कृत्स्नकर्मक्षयं कृत्वा, व्रजन्ति पदमव्ययम् ॥७३॥

प्रभावैश्वर्यविज्ञान–देवतासङ्गमादयः ।
योगोन्मेषाद् भवन्तोऽपि, नामी तत्त्वविदां मुदे ॥७४॥

न ते गुणा न तज्ज्ञानं, न सा दृष्टि र्न तत्सुखं ।
यद्योगद्योतने न स्या–दात्मन्यस्ततमश्चये ॥७५॥

ध्यानप्रशंसामाह

भवज्वलनसम्भूत–महादाहप्रशान्तये ।
शश्वद् ध्यानाम्बुधे, धीरं रवगाहः प्रशस्यते ॥७६॥

अनादिविभ्रमोद्भूतं, रागादितिमिरं घनं ।
स्फुटयत्याशु जीवस्य, ध्यानार्कप्रविजृम्भितः ॥७७॥

नास्ति ध्यानसमो बन्धुः, नास्ति ध्यानसमो गुरुः ।
नास्ति ध्यानसमं मित्रं, नास्ति समं तपः ॥७८॥

ध्यानकल्पतरुर्लोके, ज्ञानपुष्पैः सुपुष्पितः ।
मोक्षामृतफले नित्यं, फलितोऽयं सुखप्रदः ॥७९॥

जन्मलक्षार्जितं कर्म, ध्यानाभ्यासेन योगिनः ।
तमः सूर्योदयेनैव, सर्वं नश्यति तत्क्षणात् ॥८०॥
यः सदा स्नाति योगीन्द्रो, ध्यानस्वच्छमहाजले ।
क्षणमेकं कथं तिष्ठेत्, तस्मिन् कर्मरजो मलम् ॥८१॥
यदात्रिकं फलं किञ्चित, फलमामुत्रिकं च यत् ।
एतस्य द्वितीयस्यापि, ध्यानमेवाग्रकारणम् ॥८२॥
निष्प्रकम्पशिखो दीप, स्तमो यद्वन् निरस्यति ।
पापान्धतमसं हन्ति, तद्वद् ध्यानं सुनिश्चलम् ॥८३॥
निजात्मध्यानमात्रेणाऽनन्तदुष्कर्मपुद्गलाः ।
क्षीयन्ते ध्यानिनां नूनं, यथा वज्रेण चाद्रयः ॥८४॥
ध्यानामृतान्नतृप्तस्य, क्षान्तियोषिद्रतस्य च ।
अत्रैव रमते चित्तं, योगिनो योगवान्धवे ॥८४॥
भग्नदन्तो यथा हस्ती, दंष्ट्राहीनो मृगाधिपः ।
स्वकार्यसाधनेऽशक्तो, ध्यानहीनस्तथा यतिः ॥८५॥
श्रूयते ध्यानयोगेन, संप्राप्तं पदमव्ययं ।
तस्मात् सर्वप्रयत्नेन, कुर्यात् ध्यानं बुधोत्तमः ॥
मत्वेति प्रवरं ध्यानं, कर्मवैरिनिकन्दनं ।
ध्यायन्तु योगिनो नित्यं, मनःकृत्वाऽतिनिश्चलम् ॥८६॥

ध्यानादिचतुष्टयमाह–

ध्याता ध्यानं तथा ध्येयं, फलं चेति चतुष्टयम् ।
योगसंग्रहसारेऽस्मिन्, मोच्यते योगिपुङ्गवैः ॥८५॥
गुप्तेन्द्रियमना ध्याता, ध्येयं वस्तुयथास्थितं ।
एकाग्रचिन्तनं ध्यानं, निर्जरासंवरौ फलम् ॥८६॥
चित्तस्यैकाग्रता ध्यानं, ध्यातात्मा तत्फलप्रभुः ।
ध्येयमात्मगतज्योतिः, स्तद्विवि वेहयातना ॥८७॥

ध्यातृलक्षणम्

संविग्नः संवृतो धीरः, स्थिरात्मा निर्मलाशयः
सर्वावस्थासु सर्वत्र, सर्वदा ध्यातुमर्हति ॥८८॥
मुमुक्षुर्जन्मनिर्विण्णः, शान्तचित्तो वशी स्थिरः ।
जिताक्षः संवृतो धीरो, ध्याता शास्त्रे प्रशस्यते ॥८९॥
विरज्य कामभोगेषु, विमुच्य वपुषि स्पृहां ।
यस्य चित्तं स्थिरीभूतं, स हि ध्याता प्रशस्यते ॥९०॥
ज्ञानवैराग्यसम्पन्नः, संवृतात्मा स्थिराशयः ।
मुमुक्षुरुद्यमी शान्तो, ध्याता धीरः प्रशस्यते ॥९१॥
सम्यग् गुरूपदेशेन, समभ्यस्यन्ननारतं ।
१ धारणासौष्ठवाद् ध्यान–प्रत्ययानपि पश्यति ॥९२॥

श्रुतनिर्दिष्टबीजानामवधारणम् ।
सम्यग् निर्णीतजीवादि–ध्येयवस्तुव्यवस्थितिः ।
तपःसंयमसम्पन्नः, प्रमादरहिताशयः ॥९३॥
मुक्तलोकद्वयापेक्षः, सोढाऽशेषपरीषहः ।
अनुष्ठितक्रियायोगो–ध्यानयोगे कृतोद्यमः ॥६४॥
महासत्त्वः परित्यक्त–दुर्लेश्याऽशुभभावनः ।
इतीदृग् लक्षणो ध्याता, धर्म्यध्यानस्य सम्मतः ॥९५॥
देहावस्था पुनर्येव, न स्याद् ध्यानविरोधिनी ।
तदवस्थो मुनि र्ध्यायेत्, स्थित्वाऽऽसित्वाऽधिशय्य वा ॥
नरेऽधीरे वृथा वर्म, क्षेत्रेऽसस्ये वृतिर्यथा ।
यथा तथा वृथा सर्वो, ध्यानशून्यस्य तद्विधिः ॥६६॥
तत्त्वचिन्तामृताम्भोधौ, दृढमग्नतया मनः ।
बहिर्व्याप्तौ जडं कृत्वा, दृढमासनमाचरेत् ॥६७॥
यदेन्द्रियाणि पञ्चापि, स्वात्मस्थानि सदाऽऽसते ।
तदा ज्योतिः स्फुरत्यन्त–र्विशते चित्ते निमज्जति ॥९८॥

आत्मध्यानप्रभावमाह–

भूमौ जन्मेति रत्नानां, यथा सर्वत्र नोद्भवः ।
तथाऽऽत्मजमिति ध्यानं, सर्वत्राङ्गिनि नोद्भवेत् ॥१॥

तस्य कालं वदन्त्यन्त-र्मुहूर्तं मुनयः परम् ।
अत्यर्थस्पन्दमानं हि, सत्वरं दुर्धरं मनः ॥२॥
तत्कालमपि तद्ध्यानं, स्फुरदेकाग्रमात्मनि ।
उच्चैः कर्मोच्चयं भिन्द्यात्, वज्रं शैलमिव क्षणात् ॥३॥
कल्पैरप्यम्बुधिः सर्व,श्चुलुकै नौच्चुलुम्पितुम् ।
कल्पान्तभूः पुनर्वातस्तं, मुहुः शोषमनयेत् ॥४॥
अन्तर्मुहूर्तमात्रं तु, ध्यायेत् स्वस्थेन चेतसा ।
स्वदेहस्थं निजात्मानं, चिदानन्दैकलक्षणम् ॥५॥
यथा वन्हिलवेनापि, दह्यते दारुसञ्चयः ।
कर्मेन्धनानि दह्यन्ते, तथा ध्यानलवेन तु ॥६॥
यथा लोहं सुवर्णत्वं, प्राप्नोत्यौषधयोगतः ।
आत्मध्यानात् तथैवात्मा, परमात्मत्वमश्नुते ॥७॥
बुभुक्षामत्सरानङ्ग—मानमायाभयक्रुधाम् ।
निद्रालोभादिकानां च, नाशः स्यादात्मचिन्तनात् ॥८॥
एषाऽस्ति रीतिर्भुवने प्रसिद्धा, सन्तापशान्त्यै जलस्य सङ्गः
शीतोत्थ-पीडा परिहारहेतो-रुष्णोपचारः क्रियते यथा हि ॥
रोगोपशान्त्यै ह्यगदोपचारो, ह्यरक्षयोऽस्मो ह्युपचारयेत् ।
विद्यादिसिद्ध्यै विदुषां सुसङ्गः, त्यागः कुसङ्गैः परलोकसिद्ध्यै

"बलप्रयोगो रिपुरोधनार्थं जगद्वशार्थं प्रियसत्यभाषा"
विरागहेतो जिननाथसेवा, चित्तोपशान्त्यै निजतत्त्वचर्चा ।
तथैव भव्येन स्वधा सदा हि, स्वानन्दसिद्ध्यै निजध्यानयोगः
विकल्पा न प्रसूयन्ते, विषयाशा निवर्तते ।
अन्तः स्फुरति विज्ञानं, चित्ते स्थिरीकृते सति ॥१०॥
चित्तेऽनन्तप्रभावेऽस्मिन्, प्रकृत्या रसवच्चले ।
तत्तेजसि स्थिरे सिद्धे, न किं सिद्धं जगत्त्रये ॥१२॥
निर्मनस्के मनो हंसे, पुंहंसे सर्वतः स्थिरे ।
बोधहंसोऽखिलालोक्य, सरोहंसः प्रजायते ॥१३॥

उपसर्गविजयमाह–

तैरश्चमामरं मार्त्यं, मानसं भौममङ्गजं ।
सहतु समधीः सर्व–मन्तरायं द्वयातिगः ॥१४॥
नाक्षमित्वमविघ्नाय, न क्लीवर ममत्वये ।
तस्मादक्लिश्यमानात्मा, परं ब्रह्म न चिन्तयेत् ॥१५॥
वर्षं हर्षमपाकरोतु तुदतु, स्फीत[illegible] मानी तनुं,
धर्मः शर्महरोऽस्तु दंशमशकं, क्लेशाय सम्पद्यतां ।
अन्यैर्वा बहुभिः परीषहभटं, प्रारभ्यतां मे मृतिः,
मोक्षं प्रत्युपदेशनिश्चलमुने, नात्रापि किञ्चिद्भयम् ॥१६॥

ध्यानकाले निषिद्धकर्म प्राह-

न खात्कृति र्न कण्डूति, र्नोष्टभक्ति र्न कम्पितिः ।
न पर्वगणितिः कार्या, नोक्तिरन्दोलितिः स्मितिः ॥१७॥

न कुर्याद् दूरदृक्पातं, नैव केकरवीक्षणम् ।
न स्पन्दं पक्ष्ममालानां, तिष्ठेन्नासाप्रदर्शनः ॥१८॥

विक्षेपाऽक्षेपसंमोह, दुरीहैर्रहिते हृदि ।
लब्धतत्त्वे करस्थोऽय-मशेषो ध्यानजो विधिः ॥१९॥

अथध्येयमाह-

ध्येयं वस्तु वदन्ति, निर्मलधियस्तच्चेतनाचेतनं,
स्थित्युत्पत्तिविनाशलाञ्छनयुतं, मूर्तेतरं च क्रमात् ।
शुद्धध्यानविशीर्णकर्मकवचो, देवश्च मुक्ते र्वरः,
सर्वज्ञः सकलः शिवः स भगवान्, सिद्धः परो निष्कलः ॥

ध्येयं वस्तु द्विधा तच्च, चेतनाऽचेतनात्मकं ।
अशेषदोषनिर्मुक्तो, देवः सकलनिष्कलः ॥२१॥

कल्याणातिशयैराढ्यो, नवकेवललब्धिमान् ।
सभास्थितो जिनो ध्येयः, प्रातिहार्यैः परिष्कृतः ॥२२॥

विशुद्धाष्टगुणोपेतं, निर्द्वन्द्वं निर्गतामयं ।
अप्रमेयं परिच्छिन्नं, विश्वतत्त्वव्यवस्थितम् ॥२३॥

"ध्यायेद् विशुद्धमत्यन्तं, परमात्मानमव्ययम्'
तदध्येयं तदनुष्ठेयं, तद्विचिन्त्यं मनीषिभिः
यज्जीवकर्मसम्बन्ध–विश्लेषायैव जायते ॥२४॥
मार्गसूत्रमनुप्रेक्षा–स्तत्त्वं जिनेश्वरम् ।
ध्यायेदागमचक्षुष्मान्, प्रसंख्यानपरायणः ॥२५॥
निर्लेपः निष्कलः शुद्धो, निरम्लोऽत्यन्तनिर्वृतः ।
निर्विकल्पश्च शुद्धात्मा, परमात्मेति वर्णितः ॥२६॥
" स एव नियतं ध्येयः, स विज्ञेयो मुमुक्षुभिः"
अथ लोकत्रयीनाथ–ममूर्तं परमेश्वरम् ।
•ध्यातुं प्रक्रमते साक्षात्, परमात्मानमव्ययम् ॥२७॥
"भावयेदखिलसौख्यनिधानं स्वस्वरूपममल मलमुक्तये"
सर्वद्रव्यबहिर्भूतोऽप्यनन्तगुणसागरः ।
सर्वावस्थासु सर्वत्र, स्वात्मा ध्येयो मुमुक्षुभिः ॥२८॥
पुरुषः पुद्गलः कालो, धर्माऽधर्मौ तथाऽम्बरः ।
षड्विधं द्रव्यमाख्यातं, तत्र ध्येयतमः पुमान् ॥२९॥
"जिनैर्ज्ञानस्वरूपोऽय–मात्मा ध्येयतमः स्मृतः"
तत्राऽपि तत्त्वतः पञ्च, ध्यातव्या परमेष्ठिनः ।
चत्वारः सकलास्तेषु, सिद्धः स्वामी तु निष्कलः ॥३०॥

जीवस्वरूपमाह-

अनादिनिधनो जीवः, परिणामी स्वकर्मभुक् ।
कर्ता शरीरमात्रोऽस्ति, ज्ञानादिगुणलक्षणः ॥३१॥
उपसंहारविस्तार-धर्मोदृग्बोधलाञ्छनः ।
कर्ता भोक्ता स्वयं जोवस्तनुमात्रोऽप्यमूर्तिमान् ॥३२॥
तत्र जीवत्यजीवच्च, जीविष्यति सचेतनः ।
यस्मात्तस्माद् बुधैः प्रोक्तो, जीवस्तत्त्वविदां वरैः ॥३३॥
दृग्बोधसाम्यरूपत्वाज्, जानन् पश्यन् उदासीनः ।
*चित्सामान्यविशेषात्मा, स्वात्मनैवानुभूयताम् ॥३४॥
जाने तत्त्वं यथैतिह्यं, श्रद्दधे तदनन्यधीः ।
मुञ्चेऽहं सर्वमारम्भ-मात्मन्यात्मानमादधे ॥३५॥
स्वसंवेदनसुव्यक्तस्तनुमात्रो निरत्ययः ।
अत्यन्तसौख्यवानात्मा, लोकालोकविलोकनः ॥३६॥
अजातोऽनश्वरोऽमूर्तः, कर्ता भोक्ता सुखी बुधः ।
देहमात्रो मलैर्मुक्तो, गत्वोर्द्ध्वमचलः प्रभुः ॥३७॥
*अनाद्यमनन्तमचलं, स्वसंवेद्यमबाधितं ।
जीवः स्वयं तु चैतन्य-मुच्चैश्चकचकायते ॥३८॥
दृग्बोधनयनः सोऽय-मज्ञानतिमिराहतः ।
जानन्नपि न जानाति, पश्यन्नपि न पश्यति ॥३९॥

अविद्योद्भूतरागादि-गरव्यग्रीकृताशयः ।
पतत्यनन्तदुःखाग्नि-प्रदीप्ते जन्मदुर्गमे ॥४०॥
अनादिकालसम्भूतैः, कलङ्कैः कश्मलीकृतः ।
स्वेच्छयाऽर्थान् समादत्ते, स्वतोऽत्यन्तविलक्षणान् ॥४१॥
मोहेन संवृतं ज्ञानं, स्वभावं लभते न हि ।
मत्तः पुमान् पदार्थानां, यथा मदनकोद्रवैः ॥४२॥
सद्द्रव्यमस्मि चिदहं, ज्ञाता द्रष्टा सदाऽप्युदासीनः
स्वोपात्तदेहमात्रस्ततः पृथग् गगनवदमूर्तः ॥४३॥
यदचेतत्तथा पूर्वं, चेतिष्यति यदन्यथा ।
चेततीत्थं यदत्राद्य, तच्चिद् द्रव्यं समस्म्यहम् ॥४४॥
अहं चैतन्यमेवैकं, नान्यत् किमपि जातुचित् ।
सम्बन्धोऽपि न केनापि, दृढपक्षो ममेदृशः ॥४५॥
नैवात्मनो विकारः, क्रोधादिः, किन्तु सम्बन्धात् ।
स्फटिकमणेरिव रक्त-त्वमाश्रितात् पुष्पतो रक्तात् ॥४६॥

आत्मध्यानमाह-

यदिह जगति किञ्चिद्, विस्मयोत्पत्तिबीजं,
भुजगमनुजदेवे-ष्वस्ति सामर्थ्यमुच्चैः ।
तदखिमलपि मत्वा, नूनमात्मैकनिष्ठं,
भजत नियतचित्ताः शश्वदात्मानमेव ॥४७॥

अजमेकं परं शान्तं, सर्वोपाधिविवर्जितं ।
आत्मानमात्मना ज्ञात्वा, तिष्ठेदात्मनि यः स्थिरः ॥४८॥
तं चिद्रूपं निजात्मानं, स्मर शुद्धं प्रतिक्षणं ।
यस्य स्मरणमात्रेण, सद्यः कर्मक्षयो भवेत् ॥४९॥
लिङ्गत्रयविनिर्मुक्तं, सिद्धमेकं निरञ्जनं ।
निराश्रयं निराहार—मात्मानं चिन्तयेद् बुधः ॥५०॥
अहं न नारको नाम, न तिर्यग् नापि मानुषः ।
न देवः किन्तु सिद्धात्मा, सर्वोऽयं कर्मविक्रमः ॥५१॥
विकल्पविरहादात्म—ज्योतिरन्मेषवद् भवेत् ।
तरङ्गविगमाद् दूरं, स्फुटं स्थिरो भवाम्बुधिः ॥५२॥
एकमेव हि चैतन्यं, शुद्धनिश्चयतोऽथवा ।
कोऽवकाशो विकल्पानां, तत्राखण्डैकवस्तुनि ॥५३॥
अतीन्द्रियमनिर्देश्य, ममूर्तं कल्पनाच्युतं ।
चिदानन्दमयं विद्धि स्वस्मिन्नात्मानमात्मना ॥५४॥
नित्यानन्दमयं शुद्धं, चित्स्वरूपं सनातनं ।
पश्यात्मनि परंज्योतिरद्वितीयमनव्ययम् ॥५५॥
निःशेषक्लेशनिर्मुक्त—ममूर्तं परमाक्षरम् ।
निःप्रपञ्चं व्यतीताक्षं, पश्य त्वं स्वात्मनि स्थितम् ॥५६॥

नमस्यं च तदेवैकं, तदेवैकं च मङ्गलं ।
उत्तमं च तदेवैकं, तदेव शरणं सताम् ॥५७॥
तदेकं परमं ज्ञानं, तदेकं शुचि दर्शनं ।
चारित्रं च तदेवैकं, तदेकं निर्मलं तपः ॥५८॥
यदि ज्ञेयं तदेवैकं, श्रवणीयं तदेव हि ।
द्रष्टव्यं च तदेवैकं, नान्यन्निश्चयतो बुधैः ॥५९॥
तदेवैकं परं रत्नं, सर्वशास्त्रमहोदधेः ।
रमणीयेषु सर्वेषु तदेकं पुरतः स्थितम् ॥६०॥
अपारजन्मसन्तान—पथभ्रान्तिकृतश्रमं ।
तत्त्वामृतमिदं पीत्वा, नाशयन्तु मनीषिणः ॥६१॥
सर्वेषामपि कार्याणां, शुद्धचिद्रूपचिन्तनं ।
सुखसाध्यं निजाधीन—स्वामिहामुत्र सौख्यकृत् ॥६२॥
यः पश्यति निजात्मानं, निर्मलज्ञानचक्षुषा ।
दूरीभवन्ति कर्माणि, तस्य दर्शनमात्रतः ॥६३॥
वीतरागपथे स्वस्थः, प्रस्थितो मुनिपुङ्गवः ।
तस्य मुक्तिसुखप्राप्तौ, कः प्रत्यूहो जगत्त्रये ॥६४॥
सूरौ प्रवचनकुशले, साधुजने यत्नकर्मणि प्रवणे ।
चित्ते च समाधिरते, किमिहाऽसाध्यं यतेरस्ति ॥६५॥

समाधिस्थेन यद्यात्मा, बोधात्मा नानुभूयते ।
तदा न तस्य तद्ध्यानं, मूर्च्छावान् मोह एव सः ॥६६॥
तस्मान्मोहप्रहाणाय, बहिश्चिन्तानिवृत्तये ।
स्वात्मानं भावयेत् पूर्व-मेकाग्रस्य च सिद्धये ॥६७॥
जन्मलक्षे र्वतं रुप्रै, यन्नैव क्षीयते क्वचित् ।
गतः समरसे भावयं, तत्कर्म क्षपयेत् क्षणात् ॥६८॥
कर्मभ्यः कर्मकार्येभ्यः, पृथग्भूतं चिदात्मकं ।
आत्मानं भावयेत् नित्यं नित्यानन्दपदप्रदम् ॥६९॥
कर्मजेभ्यः समस्तेभ्यो, भावेभ्यो भिन्नमन्वहम् ।
ज्ञस्वभावमुदासीनं, पश्येदात्मानमात्मना ॥७०॥

येऽभ्यासयन्ति कथयन्ति विचारयन्ति,
संभावयन्ति च मुहुर्मुहुरात्मतत्त्वं ।
ते मोक्षमक्षयमनूनमनन्तसौख्यं,
क्षिप्रं प्रयान्ति नवकेवललब्धिरूपम् ॥७१॥

प्रथचतसृशुभभावनामाह-

चतस्रो भावना धन्याः, पुराणपुरुषाश्रिताः ।
मैत्र्यादयश्चिरं चित्ते ध्येया धर्मस्य सिद्धये ॥७२॥
मैत्रीप्रमोदकारुण्य-माध्यस्थ्यानि यथाक्रमम् ।
सत्त्वे गुणाधिके क्लिष्टे, निर्गुणेऽपि च भावयेत् ।

सत्त्वेषु मैत्रीं गुणिषु प्रमोदं, क्लिष्टेषु जीवेषु कृपापरत्वं ।
माध्यस्थभावं विपरीतवृत्तौ, सदा ममात्मा विदधातु देव! ॥

मैत्रीभावनामाह-

क्षुद्रेतरविकल्पेषु, चरस्थिरशरीरिषु ।
सुखदुःखाद्यवस्थासु, संश्रितेषु यथायथम् ॥७४॥
नानायोनिगतेष्वेषु, समत्वेनाविराधिका ।
साध्वी महत्त्वमापन्ना, मति मैत्रीति पठ्यते ॥७५॥
कायेन मनसा वाचा, ऽपरे सर्वत्र देहिनि ।
अदुःखजननी वृत्ति, मैत्री मैत्रीविदां मता ॥७६॥
मा कार्षीत् कोऽपि पापानि, मा च भूत् कोपि दुःखितः ।
मुच्यतां जगदप्येषा मति मैत्री निगद्यते ॥७७॥
शिवमस्तु सर्वजगतः परहितनिरता भवन्तु भूतगणाः ।
दोषा प्रयान्तु नाशं, सर्वत्र सुखीभवतु लोकः ॥७८॥
भवन्तु सुखिनः सर्वे, सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु, मा कश्चिद् दुःखभाग् भवेत् ॥७९॥
जीवन्तु जन्तवः सर्वे, क्लेशव्यसनवर्जिताः ।
प्राप्नुवन्तु सुखं त्यक्त्वा वैरं पापं पराभवम् ॥८०॥

करुणाभावनामाह-

दैन्यशोकसमुत्त्रासे, रोगपीडार्दितात्मसु ।
वधबन्धनरुद्धेषु, याचमानेषु जीवितम् ॥८१॥
क्षुत्तृट्श्रमाभिभूतेषु, शीताद्यैर्व्यथितेषु च ।
अविरुद्धेषु निस्त्रंशैः पात्यमानेषु निर्दयम् ॥८२॥
दीनेष्वार्तेषु भीतेषु, याचमानेषु जीवितम् ।
प्रतीकारपरा बुद्धिः कारुण्यमभिधीयते ॥८३॥
मरणार्तेषु जीवेषु, यत् प्रतीकारवाञ्छया ।
अनुग्रहमतिः सेयं, करुणेति प्रकीर्तिता ॥८४॥
"दीनाभ्युद्धरणे बुद्धिः, कारुण्यं करुणात्मनां"

अथप्रमोदभावनामाह

अपास्ताशेषदोषाणां, वस्तुतत्त्वावलोकिनां ।
गुणेषु पक्षपातो यः, स प्रमोदः प्रकीर्तितः ॥८५॥
तपोगुणाधिके पुंसि, प्रश्रयाश्रयनिर्भरः ।
जायमानो मनोरागः, प्रमोदो विदुषां मतः ॥८६॥
तपःश्रुतयमोद्युक्त-चेतसां ज्ञानचक्षुषां ।
विजिताक्षकषायाणां, स्वतत्त्वाभ्यासशालिनां ॥८७॥
जगत्त्रयचमत्कारि, चरणाधिष्ठितात्मनां ।
तद्गुणेषु प्रमोदो यः, सद्भिः सा मुदिता मता ॥८८॥

माध्यस्थ्यभावनामाह-

क्रोधविद्वेषु सत्त्वेषु, निस्त्रिंशक्रूरकर्मसु ।
मधुमांस सुरान्यस्त्री-लुब्धेष्वत्यन्तपापिषु ॥८९॥
देवागमयतिव्रात-निन्दकेष्वात्मशंसिषु ।
नास्तिकेषु च माध्यस्थ्यं, यत् सोपेक्षा प्रकीर्तिता ॥९०॥
क्रूरकर्मसु निःसङ्कं, देवतागुरुनिन्दिषु ।
आत्मशंसिषु योपेक्षा तन्माध्यस्थ्यमुदीरितम् ॥९१॥
"हर्षामर्षोज्झिता वृत्ति र्माध्यस्थ्यं निर्गुणात्मनि"
माध्यस्थ्यं समतोपेक्षा, वैराग्यं साम्यमस्पृहा ।
वैतृष्ण्यं प्रशमः शान्ति-रित्येकार्थोऽभिधीयते

मध्ये तिष्ठतीति मध्यस्थस्तस्य भावो माध्यस्थ्य, समस्य भावः समता । रागद्वेषयोरप्रणिधानम् । विगत रागो विरागस्तस्य भाव । समस्य भावः साम्यं । न विद्यते स्पृहा यस्मिन् सा अनिःस्पृहा । विगता तृष्णा यस्मिन् स वितृष्णस्तस्य भावो वैतृष्ण्य, प्रकर्षेम् शमः प्रशमः । शमनं शान्तिः ।

माभूत् कोऽपीह दुःखी, भवतु जगदसत्, धर्म इत्येति मैत्री,
ध्यायो हृत्सेषु रक्ष्यन्,नयनमपिशुणो, त्वेकिमेति प्रमोदं
दुःखाद्रक्षेयमार्तान्, कथमिति करुणां, मार्हम मार्गेहि, क्लिशा
काऽक्रष्येष्वित्युपेक्षा-मपि परमपदाम्भुदता माश्रयन्तु ॥९२॥

चतसृभावनायाः फलमाह–

एता मुनिजनानन्द–सुधास्यन्दैकचन्द्रिका

ध्वस्तरागाद्युरुक्लेशा, लोकाग्रपथदीपिका ॥९३॥

एताभिरनिशं योगी, क्रीडन्नत्यन्तनिर्भरं ।

सुखमात्मोत्थमत्यक्ष–मिहैवास्कन्दति ध्रुवम् ॥९४॥

भावनास्वासु संलीनः, करोत्यध्यात्मनिश्चलं ।

अवगम्य जगद्वृत्तं, विषयेषु न मुह्यति ॥९५॥

इत्थं प्रयतमानस्य, गृहस्थस्यापि देहिनः ।

करस्थो जायते स्वर्गो, नाऽस्य दूरे च तत्पदम् ॥९६॥

ध्यानलक्षणमाह–

एकाग्रचिन्तारोधो यः, परिस्पन्देनवर्जितः ।

तद्ध्यानं निर्जराहेतुः, संवरस्य च कारणम् ॥९७॥

धर्मध्यानभेदमाह–

आज्ञाऽपायौ विपाकं च, संस्थानं भुवनस्य च ।

यथागममविक्षिप्त–चेतसा चिन्तयेन् मुनिः ॥९८॥

आज्ञाविचयधर्मध्यानमाह–

वस्तुतत्त्वं स्वसिद्धान्तं, प्रसिद्धं यत्र चिन्तयेत् ।

सर्वज्ञाज्ञाभियोगेन, तदाज्ञाविचयो मतः ॥१॥

उपदेष्टुरभावेन, मन्दबुद्धितयाऽथवा ।
पदार्थानां हि सूक्ष्मत्वात्, कर्मोदयवशादथ ॥२॥
सद्दृष्टान्ताद्यभावेन, सर्वज्ञाज्ञाप्रमाणतः ।
अर्थावधारणं धर्म्यं, स्यादाज्ञाविचयः स्फुटम् ॥३॥
सर्वज्ञाज्ञां पुरस्कृत्य, सम्यगर्थान् विचिन्तयेत् ।
यत्र तद्ध्यानमाम्नात—माज्ञाख्यं योगिपुङ्गवैः ॥४॥
प्रमाणीकृत्य सार्वज्ञीमाज्ञामर्थावधारणम् ।
गहनानां पदार्थाना—माज्ञाविचयमुच्यते ॥५॥

अपायविचयधर्मध्यानमाह

अपायविचयं ध्यानं, तद्वदन्ति मनीषिणः ।
अपायः कर्मणां यत्र, सोपायः स्मर्यते बुधैः ॥६॥
ये मिथ्यादृष्टयः सर्वे, सर्वज्ञाज्ञाबहिःस्थिताः ।
सम्यङ्मार्गापेतास्ते, दूरमित्यादिचिन्तनम् ॥७॥
मिथ्यादर्शनविज्ञान, चारित्रेभ्यश्च्युता अमी ।
कथं जीवा भवन्त्यत्रे—त्यवधारणमुत्तमम् ॥८॥
अपायविचयो धर्म—ध्यानमाहुर्मनीषिणः ।
येनावाप्नोति भव्यात्मा कर्मापायं क्षणादपि ॥९॥
सोऽहंसिद्धः प्रसिद्धात्मा, दृग्बोधविमलेक्षणः
जन्मपङ्के चिरं खिन्नः, खण्ड्यमानः स्वकर्मणा ॥१०॥

मय्येव विदिते साक्षात्, विज्ञातं भुवनत्रयम् ।
यतोऽहमेव सर्वज्ञः, सर्वदर्शी निरञ्जनः ॥११॥
निर्द्धूय कर्मसंघातं, प्रबलध्यानवह्निना ।
कदा स्वं शोधयिष्यामि, धातुस्थमिव काञ्चनम् ॥१२॥
यावद्यावच्च संबन्धो, मम स्याद्वाह्यवस्तुभिः ।
तावत्तावत्स्वयं स्वस्मिन्, स्थितिः स्वप्नेऽपि दुर्घटा ॥१३॥
इत्युपायो विनिश्चेयो, मार्गाच्यवनलक्षणः ।
कर्मणां च तथापाय, उपायश्चात्मसिद्धये ॥१४॥

विपाकविचय धर्म्यध्यानमाह—

कर्मणां हि विपाकेन, फलानुभवनं प्रति ।
प्रणिधानं विपाकाख्यं, धर्मध्यानं निगद्यते ॥१५॥
रेणुवद्जन्तवस्तत्र, तिर्यगूर्ध्वमधोऽपि च ।
अनारतं भ्रमन्त्येते, निजकर्मानिलेरिताः ॥१६॥
गत्यादौ परिणामतस्तनुभृतां, प्राप्तोदयोदीरणं ।
क्लेशाश्लेषकरं सुखोत्करकरं, कर्माशुभं तच्छुभं ।
शक्त्यायुक्तमसंख्यलोकमितषट् स्थानान्वितं स्थानया,
इत्येवं विचयो विपाकविचयः प्रत्यस्तदोषोच्चयः ॥१७॥

संस्थानविचयध्यानमाह—

लोकसंस्थानचिन्तायां, संस्थानविचयो महान् ।
धर्मध्यानं मतं प्राज्ञैः, कर्माष्टकविनाशनम् ॥१८॥

अधो वेत्रासनाकारो, मध्ये स्याज्झल्लरीनिभः ।
मृदङ्गाभस्ततोऽप्युर्ध्वं, स त्रिधेति व्यवस्थितः ॥१९॥
अस्य प्रमाणमुन्नत्या, सप्त सप्त च रज्जवः ।
सप्तैका पञ्च चैका च, मूलमध्यान्तविस्तरे ॥२०॥
घनाब्धिः प्रथमस्तेषां, ततोऽन्यो घनमारुतः ।
तनुवातस्तृतीयोऽन्ते, विज्ञेया वायवः क्रमात् ॥२१॥
तत्राधो भागमासाद्य, संस्थिताः सप्त भूमयः ।
यासु नारकषण्डानां, निवासाः सन्ति भीषणाः ॥२२॥
मध्यभागस्ततो मध्ये, तत्रास्ते झल्लरीनिभः ।
यत्र द्वीपसमुद्राणां, व्यवस्था वलयाकृतिः ॥२३॥
ततो नभसि तिष्ठन्ति, विमानानि दिवौकसां ।
चरस्थिरविकल्पानि, ज्योतिष्काणां यथाक्रमम् ॥२४॥
तदूर्ध्वं सन्ति देवेश–कल्पाः सौधर्मपूर्वकाः ।
ते षोडशाच्युतस्वर्ग–पर्यन्ता नभसि स्थिताः ॥२५॥
उपर्युपरि देवेश–निवास युगलं क्रमात् ।
अच्युतान्तं ततोऽप्यूर्ध्व–मेकैकत्रिदशास्पदम् ॥२६॥
समस्तोऽयमहो लोकः, केवलज्ञानगोचरः ।
तं व्यस्तं वा समस्तं वा, स्वशक्त्या चिन्तयेद् यतिः ॥

इति निगदितमुच्चै, र्लोकसंस्थानमित्थं,
नियतमनियतं वा, ध्यायतः शुद्धबुद्धेः।
भवति सततयोगाद्, योगिनो निष्प्रमादं,
नियतमनतिदूरं, केवलज्ञानराज्यम् ॥२८॥

इति चिन्तयतो धर्म्यं, यतात्मेन्द्रियचेतसः।
तमांसि द्रवमायान्ति, द्वादशात्मोदयादिव ॥२९॥

स्फोटयत्याशु निष्कम्पो, यथा दीपो घनं तमः।
तथा कर्मकलङ्कौघं, मुनेर्ध्यानं सुनिश्चलम् ॥३०॥

इत्थं चतुर्विधं धर्म्यं, धर्माधारं निगद्यते।
येन प्राप्नोति जीवोऽयं, सिद्धिसौख्यं निरन्तरम् ॥३१॥

धर्मध्यायध्येयमाह–

सुखामृतसुधासूति, स्त्रयैकदयामलः।
परं ब्रह्माऽहमत्रासे, तमःपाशवशीकृतः ॥३२॥

तद्धामबद्धकक्षाणां, रत्नत्रयमहीयसाम्।
उभे कावुधे स्यातां, द्यावाभूमी मनोरथैः ॥३३॥

द्वादशानुप्रेक्षाचिन्तनमपि संस्थानविचयधर्म्यध्यानमस्तीत्येवाह–

संस्थानं यदनित्यताऽशरणता संसार एकाकिता,
ऽन्यत्वं चाशुचिताऽऽस्रवः सुनयतः स्यात् संवरो निर्जरा।

लोको बोध्यतिदुर्लभत्वमपरो, धर्मस्तदित्यन्वितं
भेदैः स्वैर्निचयोऽस्य, चिन्तनमनुप्रेक्षा स्मृतं द्वादश ॥३४॥

दशविधधर्मध्यानमाह-

अपायोपायजीवाज्ञा-विपाकाजीवहेतवः ।
विरागभवसंस्थाना, न्येतेभ्यो विचयं भवेत् ॥३५॥

अपायविचयमाह-

दुःखार्णवे भवेऽनादौ, यथेष्टचारिणो मम ।
अन्यस्य वा वपुर्वाक्य-मनोर्जितकुकर्मणाम् ॥३६॥
विनाशः स्यात् कथं शीघ्रं, ध्यानेन तपसाऽथवा ।
इति चिन्ताप्रबन्धो यो, ऽत्रापायविचयं हि तत् ॥३७॥
चिन्ता प्रबन्धसम्बन्धः, शुभलेश्यानुरञ्जितः ।
अपायविचयाख्यं तत्, प्रथमं धर्म्यमभीप्सितम् ॥३८॥

उपायविचयमाह-

मनोवाक्काययोगादि-प्रशस्तं मे भवेत् कथम् ।
कर्मास्रवविनिष्क्रान्तं, ध्यानेनाध्ययनेन वा ॥३९॥
इत्युपायोऽत्र तच्छुद्धयं, चिन्त्यते यो मुमुक्षुभिः ।
नानोपायैः श्रुताभ्यासै-रुपायविचयं हि तत् ॥४०॥
उपायविचयं तेषां, पुण्यानामात्मसात् क्रिया ।
उपायः स कथं मे स्यात्, इति संकल्पसन्ततिः ॥४१॥

जीवविचयधर्म्यध्यानमाह–

उपयोगमयो जीवो, मूर्तोऽमूर्तो गुणी महान् ।
शुभाशुभविधेर्भोक्ता–मोक्षगामी च तत् क्षयात् ॥४२॥
सूक्ष्मोऽसंख्यप्रदेशोऽत्र–पराधीनोऽनिशं भ्रमेत् ।
इत्याद्यंगिस्वभावानां, चिन्तनं तृतीयं हि तत् ॥४३॥
अचेतनोपकरणाः, स्वकृतोचितभोगिनः ।
इत्यादिचेतनाध्यानं, यज्जीवविचयं हि तत् ॥४४॥
अनादिनिधना जीवा, द्रव्यार्थादन्यथाऽन्यथा ।
असंख्येयप्रदेशास्ते, स्वोपयोगत्वलक्षणाः ॥४५॥

आज्ञाविचयधर्म्यध्यानमाह–

प्रमाणीकृत्य तीर्थेशान्, सर्वज्ञान् दोषदूरगान् ।
तत् प्रणीतेषु सूक्ष्मेषु, विश्वदृग्गोचरेषु च ॥४६॥
लोकालोकादितत्त्वेषु, धर्मेषु मुक्तिवर्त्मसु ।
रुचिः श्रद्धा प्रतीतिर्या, तदाज्ञाविचयं सताम् ॥४७॥
जीवादिसप्ततत्त्वानां, जिनोक्तानां च चिन्तनम् ।
तदाज्ञाविचयो नाम, धर्म्यध्यानमिदं मतम् ॥४८॥

विपाकविचयधर्म्यध्यानमाह–

सत्पुण्यप्रकृतीनां, गुडखण्डशर्करासमृतैः
समोऽत्र प्रकृतीनां च, निम्बादिसदृशोऽशुभः ॥४९॥

विपाकविचयधर्म्यध्यानमाह्-

विपाको बहुधा बद्धं, श्चिन्त्यते यत्र मानसे ।
यद्विपाकजयायोच्चं, विपाकविचयं हि तत् ॥५०॥
प्रतिक्षण इति ज्ञेयो, यः स्वकर्मफलोदयः ।
प्रतिक्षणसमुद्भूतः, चित्ररूपः शरीरिणाम् ॥५१॥
कर्मजातफलं दत्ते, विचित्रमिह देहिनाम् ।
आसाद्य नियतं नाम, द्रव्यादिकं चतुष्टयम् ॥५२॥

अजीवविचयधर्म्यध्यानमाह्-

द्रव्याणामप्यजीवानां, धर्माधर्मादिसंज्ञिनाम् ।
स्वभावचिन्तनं धर्म्य–मजीवविचयं मतम् ॥५३॥
धर्माधर्मनभःकाल–पुद्गलानां जिनागमे ।
अचेतनमयानां च, धर्मध्यानाय योगिनाम् ॥५४॥
अनेकगुणपर्यायैः, स्वरूपचिन्तनं हृदि ।
ध्रौव्योत्पादव्ययैर्यत्तत्, अजीवविचयं परम् ॥५५॥

हेतुविचयधर्म्यध्यानमाह्-

तर्कानुसारिणः पुंसः, स्याद्वादप्रक्रियाश्रयात् ।
सन्मार्गाश्रयणं ध्यानं, यद्हेतुविचयं हि तत् ॥५६॥
स्याद्वादनयमालम्ब्य, हेतुदृष्टान्तयुक्तिभिः ।
पूर्वापराविरोधेन, तर्कानुसारि धीधनैः ॥५७॥

सर्वज्ञोक्ताः पदार्थाद्याः, स्थाप्यन्ते यत्र भूतले ।
याथातथ्येन चित्ते वा, तद्धेतुविचयाभिधम् ॥५८॥

विरागविचयधर्म्यध्यानमाह-

शरीरमशुचिर्भोगाः, किम्पाकफलपाकिनः ।
विरागबुद्धिरित्यादि, विरागविचयं स्मृतम् ॥५९॥
सप्तधातुमयात् निन्द्यात्, कायादमेध्यमन्दिरात् ।
प्रतृप्तिजनकाच्छ्वभ्र-कारणाद्रोगसञ्चयात् ॥६०॥
अनन्तदुःखसम्पूर्णात्, संसाराच्चासुखच्युतात् ।
विरक्ति र्या सतां चित्ते, विरागविचयं हि तत् ॥६१॥

भवविचयधर्म्यध्यानमाह-

प्रेत्यभावो भवोऽमीषां, चतुर्गतिषु देहिनाम् ।
दुःखात्मेत्यादिचिन्ता तु, भवादिविचयं पुनः ॥६२॥
अनन्तदुःखसंकोर्णे, भवेऽनादौ सुखातिगे ।
सचित्ताऽचित्तमिश्रादि-नानायोनिषु कर्मभिः ॥६३॥
भ्रमन्ति प्राणिनोऽश्रान्तं, कर्मपाशावृता इति ।
भवभ्रमणदुःखानु-चिन्तनं ध्यानसत्तमम् ॥ ॥३४॥

संस्थानविचयधर्म्यध्यानमाह-

लोकसंस्थानचिन्तायां, संस्थानविचयो महान् ।

धर्मध्यानं मतं प्राज्ञैः, कर्माष्टकविनाशनम् ॥६५॥

अनंन्तानन्तमाकाशं, सर्वतः स्वप्रतिष्ठितम् ।
तन्मध्येऽयं स्थितो लोकः, श्रीमत्सर्वज्ञवर्णितः ॥६६॥

अनित्याद्या अनुप्रेक्षा, द्वादशाऽनन्तशर्मदाः ।
वैराग्यमातरो राग–नाशिन्यो मुक्तिमातृकाः ॥६७॥

चिन्त्यते रागनाशाय, यत्र वैराग्यवृद्धये ।
योगिभि र्योगसंसिद्धयै, संस्थानविचयं हि तत् ॥६८॥

स्थित्युत्पत्तिव्ययोपेतैः, पदार्थैश्चेतनेतरैः ।
सम्पूर्णोऽनादिसंसिद्धः, कर्तृव्यापारवर्जितः ॥६९॥

अधोवेत्रासनाकारो, मध्ये स्याज्झल्लरीनिभः ।
मृदङ्गाभस्ततोऽप्यूर्ध्वं, सन्निभेति त्रयस्थितः ॥७०॥

एतद्दशविधं धर्म–ध्यानशुक्लनिबन्धनम् ।
ध्यातव्यं ध्यानिभिर्नित्यं, विश्वश्रेयस्करं परम् ॥७१॥

अथचतुर्विधधर्म्यध्यानमाह–

पिण्डस्थं च पदस्थं च, स्वरूपस्थं रूपवर्जितम् ।
चतुर्धा ध्यानमाम्नातं, भव्यराजीवभास्करैः ॥७२॥

पदस्थं मन्त्रवाक्यस्थं, पिण्डस्थं स्वात्मचिन्तनम् ।
रूपस्थं सर्वचिद्रूपं, रूपातीतं निरञ्जनम् ॥७३॥

पिण्डस्थध्यानमाह-

ध्यातुः पिण्डे स्थितश्चैव, ध्येयोऽर्थो ध्यायते यतः ।
ध्येयं पिण्डस्थमित्याहु-रतएव च केवल ॥७४॥

धातुपिण्डे स्थितेश्चैवं, ध्येयोऽर्थो ध्यायते यतः ।
ध्येयपिण्डस्थमित्याहु-रतएव च केवलम् ॥७५॥

इतिपाठान्तरम्-

सप्तधातुविनिर्मुक्तं, पूर्णचन्द्रामलत्विषम्, ।
सर्वज्ञकल्पमात्मानं, यतः स्मरति संयमी ॥७६॥

पिण्डस्थं पञ्च विज्ञेया, धारणा वीरवर्णिता ।
संयमी यास्वसंमूढो, जन्मपाशान् निकृन्तति ॥७७॥

इत्थं यत्रानवद्यं स्मरति नवसुधा, सान्द्रचन्द्रांशुगौरं,
श्रीमत् सर्वज्ञकल्पं,कनकगिरितटे वीतविश्वप्रपञ्चं ।
आत्मानं विश्वरूपं त्रिदशगुरुगणै रप्यचिन्त्यप्रभावं ,
तत् पिण्डस्थं प्रणीतं जिनसमयमहा-म्भोधिपारं प्रयातैः ॥

अथपदस्थध्यानमाह-

पदान्यालम्ब्य पुण्यानि, योगिभिर्यद्विधीयते ।
तत्पदस्थं मतं ध्यानं, विचित्रनयपारगैः ॥७९॥

श्रुतसिन्धुसमुद्भूत-मन्यद्वा पदमक्षरं ।
तत्सर्वं मुनिभि र्ध्येयं, स्यात् पदस्थप्रसिद्धये ॥८०॥

ध्यायेद् वा वाङ्मयं ज्योति, र्गुरुपञ्चकवाचकं ।
एतद्धि सर्वविद्याना-मधिष्ठानमनश्वरम् ॥८०॥
तपःश्रुतविहीनोऽपि, तद्ध्यानाविद्धमानसः ।
न जातु तमसां स्रष्टा, तत्तत्वर्णाक्षिणोधीः ॥८१॥
स्मर दुःखानलज्वाला-प्रशान्तेर्नवनीरदम् ।
प्रणवं वाङ्मयज्ञान-प्रदीपं पुण्यशासनम् ॥८३॥
गुरुपञ्चनमस्कार-लक्षणं मन्त्रमूर्जितम् ।
विचिन्तयेज् जगज्जन्तु-पवित्रीकरणक्षमम् ॥८४॥
स्मर मन्त्रपदाधीशं, मुक्तिमार्गप्रदीपकं ।
नाभिपङ्कजसंलीन-मवर्णं विश्वतो मुखम् ॥८५॥
सिवर्णं मस्तकाम्भोजे, साकारं मुखपङ्कजे ।
आकारं कण्ठकञ्जस्थं, स्मरोकारं हृदि स्थितम् ॥८६॥
श्रियमात्यन्तिकीं प्राप्ता, योगिनो येऽत्र केचन ।
अमुमेव महामन्त्रं, ते समाराध्य केवलम् ॥८७॥
अनेनैव विशुद्धयन्ति, जन्तवः पापपङ्किलाः ।
अनेनैव विमुच्यन्ते, भवक्लेशान्मनीषिणः ॥८८॥
असावेव जगत्यस्मिन्, भव्यव्यसनबान्धवः ।
अमुं विहाय सत्त्वानां, नान्यः कश्चित्कृपापरः ॥८९॥

शतमष्टोत्तरं चास्य, त्रिशुद्धया चिन्तयन् मुनिः ।
भुञ्जानोऽपि चतुर्थस्य, प्राप्नोत्यविकलं फलम् ॥८९॥
मन्त्रः प्रणवपूर्वोऽयं, निःशेषाभीष्टसिद्धिदः ।
ऐहिकानेककामार्थं, मुक्त्यर्थं प्रणवच्युतः ॥९०॥
मङ्गलशरणोत्तम-पदनिकुरम्बं यस्तु संयमी स्मरति ।
अविकलमेकाग्रधिया, स चापवर्गश्रियं श्रयति ॥९१॥
स्मर पञ्चपदोद्भूतां, महाविद्यां जगन्नुताम् ।
गुरुपञ्चकनामोत्थां, षोडशाक्षरराजिताम् ॥९२॥
"अर्हत्सिद्धाचार्योपाध्यायसर्वसाधुभ्यो नमः"

अथ रूपस्थध्यानमाह–

देवं देवसभासीनं, पञ्चकल्याणनायकं ।
चतुस्त्रिंशद्गुणोपेतं, प्रातिहार्योपशोभितम् ॥१॥
निरञ्जनं जिनाधीशं, परमं रमयाश्रितं ।
अच्युतं च्युतदोषौघ-मभवं भवसूदनम् ॥२॥
सर्वसंस्तुत्यमस्तुत्यं, सर्वेश्वरमनीश्वरम् ।
सर्वाराध्यमनाराध्यं, सर्वाश्रयमनाश्रयम् ॥३॥
नीरूपं रूपिताशेष-मशब्दं शब्दनिश्चितं ।
अस्पर्शं योगसंस्पर्श्य-मगम्यं सरलागमम् ॥४॥

गुणैः सुरभितात्मान—मगन्धगुणसङ्गमम् ।
अतीतेन्द्रियसद्भाव—मिन्द्रियार्थावभासकम् ॥५॥
ध्रुवमानन्दसस्याना—मम्भस्तृष्णा लताभिदाम् ।
पवनं दोषरेणूना—मनिमेनोऽवनीरुहाम् ॥६॥
यजमानं सपर्याना, व्योमालेपाधिसम्पदाम् ।
भानुं भव्यारविन्दानां, चन्द्रं मोक्षामृतश्रियाम् ॥७॥
असुप्तदीपनिर्वाणेऽप्राकृते वा त्वयि स्फुटं ।
असुप्तदीपनिर्वाणं, प्राकृतं स्याज्जगत्त्रयम् ॥८॥
सनिर्वाणं वैशेषिकाणां, ज्ञानाद्यभावाभ्युपगमात् ।
सुप्तनिर्वाणं सांख्यानां, चित्तमात्राभ्युपगमात्
दीपनिर्वाणं बौद्धानां, निरन्वयविनाशाभ्युपगमात्,
त्रयीमार्गं त्रयीरूपं, त्रयीमुक्तं त्रयीपतिं ।
त्रयीव्याप्तं त्रयीतत्त्वं, त्रयीचूडामणिस्थितं ॥९॥

रत्नत्रयं मार्गो यस्य स त्रयीमार्गस्तं त्रयीमार्गम् ।
रत्नत्रयरूपं, अथवा सत्तासुखचैतन्यरूपम्, रागद्वेषमोहरहितं, अथवा जातिजरामरणमुक्तं, जगत्त्रयपतिम्, कालत्रयव्याप्तम् । उत्पादव्यय ध्रौव्यमेव तत्त्वं यस्य । लोकत्रये चूडामणिवत् स्थितं

जगतां कौमुदीचन्द्रं, कामकल्पावनीरुहम् ।
गुणचिन्तामणिक्षेत्रं, कल्याणागमनाकरम् ॥१०॥

प्रणिधानप्रदीपेषु, साक्षाविव चकासतम् ।
ध्यायेज् जगत्त्रयार्चाऽहं–मर्हन्तं सर्वतोमुखम् ॥११॥

रूपस्थध्यानफलमाह–

परापरपरं देव–मेवं चिन्तयतो यतेः ।
भवन्त्यतीन्द्रियास्ते ते, भावा लोकोत्तरश्रियः, ॥१२॥
आहुस्तस्मात् परं ब्रह्म, तस्मादैन्द्रं पदं करे ।
इमास्तस्माद्यत्नाप्या, श्चक्राङ्काः क्षितिपश्रियः ॥१३॥

रूपातीध्यानमाह–

अथ रुपे स्थिरीभूत–चित्तः प्रक्षीणविभ्रमः ।
अमूर्तमजमव्यक्तं, ध्यातुं प्रक्रमते ततः ॥१४॥
चिदानन्दमयं शुद्ध–ममूर्त्तं परमाक्षरं ।
स्मरेद् यत्रात्मनाऽऽत्मानं तद्रूपातीतमिष्यते ॥१५॥
व्योमाकारमनाकारं, निष्पन्नं शान्तमच्युतं ।
चरमाङ्गात् कियन्न्यूनं, स्वप्रदेशै र्घनैः स्थितम् ॥१६॥
लोकाग्रशिखरासीनं, शिवीभूतमनामयम् ।
पुरुषाकारमापन्न–मत्यमूर्त्तं च चिन्तयेत् ॥१७॥
निष्कलः परमात्माऽहं, लोकालोकावभासकः ।
विश्वव्यापी स्वभावस्थो, विकारपरिवर्जितः ॥१८॥

इतिविगतविकल्पं–क्षीणरागादिदोषं,
विदितसकलवेद्यं–त्यक्तविश्वप्रपञ्चम् ।
शिवमजमनवद्यं–विश्वलोकैकनाथं,
परमपुरुषमुच्चै–र्भावशुद्धया भजस्व ॥१५॥

रूपातीतध्यानफलमाह–

स्फोटत्याशु निष्कम्पो, यथा दीपो घनं तपः ।
तथा कर्मकलङ्कौघं, मुने र्ध्यानं सुनिश्चलम् ॥१६॥

## अथ शुक्लध्यानमाह

अथ धर्म्यमतिक्रान्तः, शुद्धिं चात्यन्तिकीं श्रितः ।
ध्यातुमारभते धीरः, शुक्लमत्यन्तनिर्मलम् ॥१॥
कषायमलविश्लेषात्, प्रशमाद्वा प्रसूयते ।
यतः पुंसामतस्तज्ज्ञैः, शुक्लमुक्तं निरुक्तिकम् ॥२॥
आदिसंहननोपेतः, पूर्वज्ञः पुण्यचेष्टितः ।
चतुर्विधमपि ध्यानं, स शुक्लं ध्यातुमर्हति ॥३॥
आद्यसंहननोपेता, निर्वेदपदवीं श्रिताः ।
कुर्वन्ति निश्चलं चेतः, शुक्लध्यानक्षमं नराः ॥४॥

शुक्लध्यानध्यातृलक्षणमाह–

संविग्नः संवृतो धीरः, स्थिरात्मा निर्मलाशयः ।
सर्वावस्थासु सर्वत्र, सर्वदा ध्यातुमर्हति ॥५॥

प्रथक्त्ववितर्कवीचारशुक्लध्यानमाह-

"सवितर्कं सविचारं, सपृथक्त्वं च कीर्तितम्"

पृथक्त्वं तत्र नानात्वं, वितर्कः श्रुतमुच्यते ॥६॥

अर्थव्यञ्जनयोगानां, वीचारः संक्रमः स्मृतः ।

श्रुतस्कन्धमहासिन्धु-मवगाह्य महामुनिः ।

ध्यायेत् पृथक्त्ववितर्क-वीचारं ध्यानमग्रिमम् ॥७॥

त्रियोगी पूर्वविद् यः स्या-दिदं ध्यायत्यसौ मुनिः ।

सवितर्कं सविचारं, सपृथक्त्वमतो मतम् ॥८॥

अस्याचिन्त्यप्रभावस्य, सामर्थ्यात् स प्रशान्तधीः ।

मोहमुन्मूलयत्येव, शमयत्यथवा क्षणे ॥९॥

विचारलक्षणमाह-

अर्थादर्थान्तरापत्ति-रर्थसंक्रान्तिरिष्यते ।

ज्ञेया व्यञ्जनसंक्रान्ति, र्व्यञ्जनाद् व्यञ्जने स्थितिः ॥

स्यादियं योगसंक्रान्ति, र्योगाद् योगान्तरे गतिः ।

विशुद्धध्यानसामर्थ्यात्, क्षीणमोहस्य योगिनः ॥११॥

एकत्ववितर्कावीचारशुक्लध्यानमाह-

पृथक्त्वे तु यदा ध्यानी, भवत्यमलमानसः ।

तदैकत्वस्य योग्यः स्या-दाविर्भूतस्त्वविक्रमः ॥१२॥

सवितर्कमविचारमेकत्वपदलाञ्छितं ।
कीर्तितं मुनिभिः शुक्लं, द्वितीयमतिनिर्मलम् ॥१३॥
अविचारो वितर्कस्य, यत्रैकत्वेन संस्थितः ।
सवितर्कमवीचारं, तदेकत्वं विदुर्बुधाः ॥१४॥
द्रव्यं चैकमणु चैकं, पर्यायं चैकमभ्रमः ।
चिन्तयत्येकयोगेन, यत्रैकत्वं तदुच्यते ॥१५॥
ज्ञेयं प्रक्षीणमोहस्य, पूर्वज्ञस्याऽमितद्युतेः ।
सवितर्कमिदं ध्यान-मेकत्वमतिनिश्चलम् ॥१६॥
दृग्बोधरोधकद्वन्द्वं, मोहविघ्नस्य वा परं ।
स क्षिणोति क्षणादेव, शुक्लधूमध्वजार्चिषा ॥१७॥
तदा स भगवान् देवः, सर्वज्ञः सर्वदोदितः ।
अनन्तसुखवीर्यादि-भूतेः, स्यादग्रिमं पदम् ॥१८॥
तदार्हत्वं परिप्राप्य, स देवः सर्वगः शिवः ।
जायतेऽखिलकर्मौघ-जरामरणवर्जितः ॥१९॥
कल्याणविभवं श्रीमान्, सर्वाभ्युदयसूचकं ।
समासाद्य जगद्वन्द्यं, त्रैलोक्याधिपतिर्भवेत् ॥२०॥

अथसूक्ष्मक्रियाऽप्रतिपातिध्यानमाह-

सर्वज्ञःक्षीणकर्माऽसौ, केवलज्ञानभास्करः ।
अन्तर्मुहूर्तशेषायु, स्तृतीयंध्यानमर्हति ॥२१॥

अनन्तवीर्यसंपन्नः, [illegible] ॥३९॥
वाक्पथातीतमाहात्म्य—[illegible]: ।
सिद्धात्मनां गुणग्रामं, सर्वज्ञानगोचरम् ॥४०॥
शक्यते न यथा ज्ञातुं, पर्यन्तं व्योमकालयोः ।
तथा रत्नत्रयजातानां, गुणानां परमेष्ठिनः ॥४१॥
सर्वाङ्गीणं विषं यद्वत्, मन्त्रशक्त्या प्रकृष्यते ।
तद्वत् कर्मविषं कृत्स्नं, ध्यानशक्त्याऽपसार्यते ॥४२॥
यत्र त्रियोगिनामाद्यं, द्वितीयं त्वेकयोगिनां ।
तृतीयं तनुयोगानां, स्यात्तुरीयमयोगिनाम् ॥४३॥
छद्मस्थयोगिनामाद्ये, द्वे तु शुक्ले प्रकीर्तिते ।
द्वे त्वन्त्ये क्षीणदोषाणां, केवलज्ञानचक्षुषाम् ॥४४॥
योऽसावभ्यन्तरं प्रोक्तं, तपोऽन्तःशत्रुनाशनं ।
विधेयं परया भक्त्या[illegible] बुधैः ॥४५॥
एतद् द्वादशधा प्रोक्तं, [illegible] तपः ।
सर्वयत्नेन मुक्त्यर्थ—माचरन्तु तपोधनाः ॥४६॥
गता यान्ति च यास्यन्ति, मुक्तिं येऽत्र मुमुक्षवः ।
कर्मारीन् केवलं हत्वा, तपोभिस्ते न चान्यथा ॥४७॥
चिन्तामणिस्तपः पुंसां, धेनुः कामदुघा तपः ।
तिलकोऽस्ति तपो भव्य, [illegible] ॥४८॥

अज्ञानतिमिरोच्छेदे हि, जायते दीपक स्तपः ।
पितेव सर्वावस्थासु, करोति नृहितं तपः ॥४९॥
विभीमविषयाम्भोधे, स्तपो निस्तारणे प्लवः ।
तप उत्तारकं ज्ञेयं, विभीमविषयावटात् ॥
इन्द्रियार्थमहातृष्णा, च्छेदकं सलिलं तपः ।
दुर्गतीनामगम्यानां, निषेधे परिघस्तपः ॥५१॥
मनःकायासुखव्याघ्र–त्रस्तानां शरणं तपः ।
कल्मषाणामशेषाणां, तीर्थं प्रक्षालने तपः ॥५२॥
तपः संसारकान्तारे, नष्टानां देशकं यतः ।
दीर्घे भवपथे जन्तोः, स्तपः सम्बलकायते ॥५३॥
श्रेयसामाकरो ज्ञेयं, भयेभ्यो रक्षकं तपः ।
सोपानमारुरुक्षूणा–मबाधं सिद्धिमन्दिरम् ॥५४॥
तन्नास्ति भुवने वस्तु, तपसा यन्न लभ्यते ।
तपसा दह्यते कर्म, वन्हिनेव तृणोत्करः ॥५५॥

ॐ ह्रीं उत्तमतपोधर्माङ्गाय नमः

कामेन्द्रियदमं सारं, तपः सारं कर्मारिनाशनं ।
पूजया परया भक्त्या, पूजयामि तवाप्तये ॥५६॥

ॐ ह्रीं परमब्रह्मणे उत्तमतपो धर्माङ्गाय नमः
अर्घ्यं निर्वपामीति स्वाहा

# उत्तमत्यागधर्मः

## मङ्गलाचरणम्

अदृष्टपर्यन्तसुखप्रदायिने,
विमूढसत्त्वाप्रतिबोधहेतवे
अजन्मने जन्मनिबन्धनच्छिदे,
निरावृतिज्ञानमयाय ते नमः ॥१॥

हरति जननदुःखं मुक्तिसौख्यं विधत्ते,
रचयति शुभबुद्धिं पापबुद्धिं धुनीते ।
अवति सकलजन्तून् कर्मशत्रून् निहन्ति,
प्रशमयति मनो यस्तं बुधा धर्ममाहुः ॥२॥

वाह्याभ्यन्तरपरिग्रहत्यजनं त्यागः, ज्ञानसंयमशौचोपकरणदानं त्यागः । आत्माऽहितकृतविषयकषायाणां त्यजनं त्यागः । रागद्वेष कामक्रोधादिविकारभावानां त्यजनं त्यागः, आत्मव्यतिरिक्तबाह्य पदार्थेषु इष्टानिष्टकल्पनात्यजनं त्यागः । निजशुद्धात्मपरिग्रहं कृत्वा । बाह्याभ्यन्तरपरिग्रहनिवृत्तिस्त्यागः त्रिविधपात्रेभ्यश्चतुर्विधाहारदानं त्यागः । ऐहिकामुत्रिकफलार्थमर्थव्ययस्त्यागः ।

"आत्मवित्तानुसारेण, त्यागः कार्यो विवेकिना"

सोऽपि दातृपात्रदानफलभेदेन चतुर्विधो भवति ।

तत्र प्रथमं दातृलक्षणमाह–

सप्तगुणसंयुतः सम्यग्दृष्टि र्नवविधपुण्योपार्जन कृत् सद्धर्मतत्परो दाता ज्ञेयः । यत् सकलगुणगणनिधिभ्यः सत्पात्रेभ्यो भक्तिपूर्वक नव पुण्यार्जनं कृत्वा स्वपरानुग्रहार्थम् दानं दीयते स त्यागः प्रोक्त ।

त्यागो भोगो विनाशश्च, विभवस्य त्रयोगतिः ।
द्वे यस्याद्ये न विद्येते, नाशस्तस्यावशिष्यते ॥३॥

त्याग एव गुणः श्लाघ्यः, किमन्यैर्गुणशालिभिः ।
त्यागाज् जगति पूज्यन्ते, पशुपाषाणपादपाः ॥४॥

त्यागो हि परमो धर्म, स्त्याग एव परं तपः ।
त्यागाद् इह यशोलाभः, परत्राभ्युदयो महान् ॥५॥

शक्त्या दोषैकमूलत्वान्, निवृत्तिरुपधेः सदा ।
त्यागो ज्ञानादिदानं वा, सेव्यः सर्वगुणाग्रणी ॥६॥

"सुखं सकलसंन्यासो दुःखं तस्य विपर्ययः"

द्रव्यानुसारेण ददाति दानं, पात्रेषु शीलस्थितमानवेषु ।
यो भावतो जैनमतानुरागी, स त्यागधर्मः कथितो जिनेन्द्रैः ॥

जो चयदि मिट्ठभोज्जं, उवयरणं रायदोससंजणकं ।
वसदिममत्तहेदुं, चायगुणो सो हवे तस्स ॥८॥

णिव्वेगतियं भावइ, मोहं चइऊण सव्वदव्वेसु ।
जो तस्स हवे चागो इदि, भणिदं जिणवरिंदेहिं ॥९॥

परिग्रहपरित्यागः दानं, श्रुतदयोद्भवं ।
धर्महेतो विधातव्यं, धर्मदं च गुणाकरम् ॥१०॥

त्यज्यते रज्यमानेन, राज्येनाऽन्येन वा जनः ।
भज्यते त्यज्यमानेन, तत्त्यागोऽस्तु विवेकिनां ॥११॥

कः पूरयति दूष्पूर-माशागर्तं चिरादहो ।
चित्रं यत्क्षणमात्रेण, त्यागेनैकेन पूर्यते ॥१२॥

दातृप्रशंसामाह–

दातृयाचकयो र्भेदः कराभ्यामेव दर्शितः ।
अर्थिनस्तिष्ठतोऽधस्तात् स दातुरुपरिस्थितः ॥१३॥

त्यागमहिमानमाह–

आज्ञाऽभिमानमुत्सृज्य, मौनमास्थितवानयं ।
प्राप्नोति परमामाज्ञां, सुरासुरशिरोधृताम् ॥१४॥

स्वं स्वाम्यमैहिकं त्यक्त्वा, परमस्वामिनं जिनं ।
सेवित्वा सेवनीयत्व–मेष्यत्येष जगज्जनैः ॥१५॥

स्वं स्वापतेयमुचितं, त्यक्त्वा निर्ममतामितः ।
स्वयं निर्विविकरम्भोस्य, सेव्यते द्वारि दूरतः ॥१६॥

स्वगुणोत्कीर्तनं त्यक्त्वा, त्यक्तकामो महातपाः ।
स्तुतिनिन्दासमो भूयः, कीर्त्यते भुवनेश्वरैः ॥१७॥
वन्दित्वा वन्द्यमर्हन्तं यतोऽनुष्ठितवांस्तपः ।
ततोऽयं वन्द्यते वन्द्यैरनिन्द्यगुणसन्निधिः ॥१८॥
त्यक्तकामसुखो भूत्वा, तपस्याऽस्थाच्चिरं यतः ।
ततोऽयं सुखसाद् भूत्वा, परमानन्दथुं भजेत् ॥१९॥
तपोऽयमनुपानत्कः, पादचारी विवाहनः ।
कृतवान् पद्मगर्भेषु चरणन्यासमर्हति ॥२०॥
किमत्र बहुनोक्तेन, यद्यदिष्टं यथाविधं ।
त्यजेन् मुनिरसंकल्पस्तत्तत् सूतेऽस्य तत्तपः ॥२१॥

उत्पादिता स्वयमियं यदि तत् तनूजा,
तातेन वा यदि तदा भगिनी खलु श्रीः ।
यद्यन्यसङ्गमवती च ततः परस्त्री,
तत्त्यागबद्धमनसः सुधियस्ततोऽभो ॥२२॥

धनानि जीवितं चैव, परार्थे प्राज्ञ उत्सृजेत् ।
सन्निमित्ते वरं त्यागो, विनाशे नियते सति ॥२३॥
यादृशस्तादृशो वाऽपि, पुमांस्त्यागाद् महामुनिः ।
कल्याणाशीः प्रजल्पकं,श्चिन्तामणिरिवार्च्यते ॥२४॥

उदारदानी पुरुषः कीर्त्या विधुरिव दिशां मण्डलं श्वेतयते, बृहस्पतीव वाग्मी जायते, पूषेव प्रतापनिलयः स्यात्, नीत्यां शुक्राचार्यसदृशो भवति ।

दानस्य पञ्चाधिकारान् प्राह–

**पात्रं दाता दानविधि, र्देयं दानफलं तथा ।**
**अधिकारा भवन्त्येते, दाने पञ्च यथाक्रमम् ॥२५॥**

सत्पात्रं त्रिविधं भवति सर्वसङ्गविनिर्मुक्तान् गुणसम्पदा समन्वितान्, रत्नत्रयविभूषितान्, सर्वप्राणिहितोद्यमान् भव्यजीवबोधकान् पापभीरून् इन्द्रियमनोगजसिंहान् महाधैर्यवतः संख्यातीतगुणसमुद्रान् तृणहेमशत्रुमित्रसमभावान् सर्वाङ्गमललिप्तान् संसारसागरसंतारकान् मुनीन्द्रान् उत्तमपात्रान् विद्धि ।

**यतिः स्यादुत्तमं पात्रं, मध्यमं श्रावकोऽधमम् ।**
**सुदृष्टिस्तद्विशिष्टत्वं, विशिष्टगुणयोगतः ॥२६॥**

**आग्रहो हि शमे येषां, विग्रहं कर्मशत्रुभिः ।**
**विषयेषु निरासङ्गा, स्ते पात्रं यतिसत्तमाः ॥२७॥**

**निःसङ्गिनोऽपि वृत्ताढ्या, निःस्नेहा सुश्रुतिप्रियाः ।**
**अभूषाऽपि तपोभूषा, स्ते पात्रं योगिनः सदा ॥२८॥**

**परीषहजये शक्ताः सक्ताः कर्मपरिक्षये ।**
**ज्ञानध्यानतपःसक्ता, स्ते पात्रं दातुरुत्तमम् ॥२९॥**

अथ मध्यमपात्रलक्षणमाह-

साणुव्रताः शुद्धदृशोऽकषायिणः,
स्वस्त्रीप्रहृष्टाः सदयाः शुभाशयाः ।
साधुप्रिया जैनजनोपकारिणः,
ते साधुभि र्मध्यमपात्रमीरितम् ॥३०॥

धर्मंवर्धयति क्षमां रचयति, क्रोधं विवादं नृणां,
शक्त्या वा वचसा नयेन मृदुना, यः स्तम्भयत्यन्वहं ।
धर्मं च्छिद्रमुपावृणोति सकलं, संघं मुदा रक्षति,
पात्रं मध्यममाहुरुत्तमजनास्तं मर्त्यमुद्यद्दृशम् ॥३१॥

सन्तुष्टो यः स्वदारेषु, पञ्चाणुव्रतपालकः ।
सम्यग्दृष्टिर्गुरौ भक्तः, स पात्रं मध्यमं भवेत् ॥३२॥

जिनमुनिपदाब्जभृङ्गाः, मुनिवचनसुधाम्बुपानसन्तुष्टाः ।
जैनानुकूलव्रतास्ते पात्रं मध्यमं ब्रुवन्त्यार्याः ॥३३॥

पुनर्ये सम्यग्दृष्टयो व्रतोपेताः दानपूजापरायणाः सदाचारास्तान् मध्यमपात्रान् जानीहि ।

जघन्यपात्रमाह-

व्रतहीनान् सम्यग्दृष्टीन् जिनादिपञ्चपरमेष्ठिभक्तितत्परान् जिन शासनप्रभावकान् सधर्मिवत्सलान् जघन्यपात्रान् ब्रूहि ।

पञ्चविधपात्रलक्षणमाह-

उत्कृष्टपात्रमनगारमणुव्रताढ्यं,
मध्यं व्रतेन रहितं सुदृशं जघन्यम् ।
निर्दर्शनं व्रतनिकाययुतं कुपात्रं,
युग्मोज्झितं नरमपात्रमिदं तु विद्धि: ॥३४॥

पात्रभेदान प्राह-

समयी साधकः साधुः, सूरिः समयदीपकः ।
तत्पुनः पञ्चधा पात्र-मामनन्ति मनीषिणः ॥
गृहस्थो वा यति र्वापि, जैनं समयमास्थितः ।
यथाकालमनुप्राप्तः पूजनीयः सुदृष्टिभिः ॥३५॥
ज्योतिर्मन्त्रनिमित्तज्ञः, सुप्रज्ञः कार्यकर्मसु ।
मान्यः समयिभिः सम्यक्, परोक्षार्थसमर्थधीः ॥३६॥
दीक्षायात्राप्रतिष्ठाद्याः, क्रियास्तद्विरहे कुतः ।
तदर्थं परपृच्छायां, कथं च समयोन्नतिः ॥३७॥
मूलोत्तरगुणश्लाघ्यं, स्तपोभि र्निष्ठितस्थितिः ।
साधुः साधु भवेत् पूज्यः, पुण्योपार्जनपण्डितैः ॥३८॥
ज्ञानकाण्डे क्रियाकण्डे, चातुर्वर्ण्यपुरःसरः ।
सूरिर्देव इवाराध्यः, संसाराब्धितरण्डकः ॥३९॥
लोकवित्वकवित्वाद्यै, र्वादवाग्मित्वकौशलैः ।
मार्गप्रभावनोद्युक्ताः, सन्तः पूज्या विशेषतः ॥४०॥

कार्यपात्रलक्षणमाह-

प्रगल्भवृत्त्या वरकार्यकोविदा ।
प्रयोजिताः स्वाम्यनुकूलवर्तिनः ।
महत्सु कार्येष्वनुयायिनो नराः ।
तान् कार्यपात्रं प्रवदन्ति साधवः ॥४१।
विचित्रभावं नयहेतुदर्शनैः,
सुधर्ममार्गं प्रतिपादयन्ति ये ।
मातेव शिक्षामनुबन्धकारिणः,
तान् कार्यपात्रं प्रवदन्ति साधवः ॥४२॥

कामपात्रलक्षणमाह-

भोगपात्रं तु दारादि-संसारसुखदायकं ।
तस्य देयं सुभूषादि, स्वशक्त्या धर्महेतवे ॥४३॥
यदि न दीयते तस्य, करोति न वचस्तदा ।
पूजादानादिकं नैव, कार्यं हि घटते गृहे ॥४४॥

दातृलक्षणमाह-

पञ्चसूनापरः पापं, गृहस्थः सञ्चिनोति यत् ।
तदपि क्षालयत्येव, मुनिदानविधानतः ॥४५॥
खण्डनी पेषणी चुल्ली, उदकुम्भः प्रमार्जनी ।
पञ्चसूना गृहस्थस्य, तेन मोक्षं न गच्छति ॥४५॥

आहारनिषिद्धगृहदातृलक्षणमाह–

अभक्तानां कदर्याणा– मव्रतानां च सद्मसु
न भुञ्जीत तथा साधु, र्दैन्यकारुण्यकारिणां ॥४६॥
शिल्पिकारुक वाक्पण्य–संभली पतितादिषु ।
देहस्थितिं न कुर्वीत, लिङ्गिलिङ्गोपजीविषु ॥४७॥
गायकस्य तलारस्य, नीचकर्मोपजीविनः ।
मालिकस्य विलिङ्गस्य, वेश्यायारतैलिकस्य च ॥४८॥
दीनस्य सूतिकायाश्च, छिपकस्य विशेषतः ।
मद्यविक्रियिणो मद्य–पानसंसर्गिणश्च न । ॥४९॥
क्रियते भोजनं गेहे, यतिना भोक्तुमिच्छुना ।
एवमादिकमप्यन्यच्चिन्तनीयं स्वचेतसा ॥५०॥

साधुदानकाले त्याज्यकार्यमाह–

शाठ्यं गर्वमज्ञानं, पारिप्लवमसंयमं ।
वाक्पारुष्यं विशेषेण, वर्जयेत् भोजनक्षणे ॥५१॥

दानस्य पञ्च भूषणानि प्राह–

आनन्दाश्रूणि रोमाणि, बहुमानं प्रियं वचः ।
पश्चाद् दानानुमोदं च, दाने पञ्चैव भूषणम् ॥५२॥

दानस्य पञ्च दूषणानि प्राह–

अनादरो विलम्बं च, विमुखं विप्रियं वचः ।
पश्चात्तापोऽनुतापश्च, दाने पञ्चैव दूषणम् ॥५२॥

दातृप्रशंसामाह–

तूर्यमंशं परो दत्ते, षष्ठं वा स्वस्य मध्यमः ।
जघन्यो दशमं प्रांशं, दातेति त्रिधोक्तिः ॥५३॥
यो दत्ते बहु तूर्यांशात्, दानश्रेष्ठः स उच्यते ।
दशमांशादपि स्वल्पं यो, दत्ते सोऽल्पदः स्मृतः ॥५४॥
परलोकधिया कश्चित्, कश्चिदैहिकचेतसा ।
औचित्यमनसा कश्चित्, सतां वित्तव्ययक्रिया ॥५५॥
सर्वारम्भप्रवृत्तानां, गृहस्थानां धनव्ययः ।
बहुधाऽस्ति ततोऽत्यर्थं न, कर्तव्या विचारणा ॥५६॥
"दैवाल्लब्धधनं धन्यैं र्वप्तव्यं समयाश्रिते"

औचित्यलक्षणमाह—दानप्रियवचनाभ्यामन्यस्य सन्तोषोत्पादनं

औचित्यमेकमेकत्र, गुणानां राशिरेकतः ।
विषायते गुणग्राम, औचित्यपरिवर्जितः ॥५७॥
नवकोटीविशुद्धस्य, दाता दानस्य यः पतिः ।
भक्तिश्रद्धासत्त्वतुष्टि–ज्ञानालोल्यक्षमागुणः ॥५८॥
नवोपचारसम्पन्नः, समेतः सप्तभिर्गुणैः ।

अन्नैश्चतुर्विधैः शुद्धैः, [illegible] ॥५९॥

मुमुक्षूणां क्षुधां तीव्रां, यो निवारयतीद्धृशं ।
स एव मान्यो वन्द्योऽसौ, संसाराब्धितरण्डकः ६०॥

यदि पात्रमलब्धं चे-देवं निन्दां करोत्यसौ ।
वासरोऽयं वृथा यातः, पात्रदानं विना मम ॥६१॥

केचिच्च दानिनः सन्ति, केचिच्च [illegible] ।
[illegible] च, [illegible] च दुर्लभाः ॥६२॥

द्वीपेष्वर्धतृतीयेषु, पात्रेभ्यो वितरन्ति ये ।
ते धन्या इति च [illegible] ॥६३॥

सत्पात्र[illegible] कुरुते सुपुण्यं ।
पापं निहन्ति सकलं सकल[illegible] ।
स्वर्गादिजातममलं च सुखं [illegible],
तस्मिन् गृहे क्षरति, [illegible] ॥६४॥

पञ्चाश्चर्यमाह

तावद् दुन्दुभयो नेदु, गगनेऽदृष्टताडिताः ।
ववौ समीरणः स्वैरं, घ्राणरञ्जनकारणम् ॥६४॥

साधुसाध्विति देवानां, मधुरो निस्वनोऽभवत् ।
ववर्षं पञ्चवर्णानि, कुसुमानि नभस्तलात् ॥६५॥

पात्रदानानुभावेन, दिव्या सकलवर्णिका ।
पूरयन्ती नभोऽपतद् वसुधारा महाद्युतिः ॥६६॥

अदातृनिन्दामाह-

ये लोभग्रस्ता धनिन. सुखार्णवं दानं न दद्यु ते उरगा भूत्वा धनं रक्षितु तिष्ठन्ति । अतो गृहस्थता पात्रदानेन गुणवती प्रोक्ता तद्हीना सा पाषाणनौकोपमा ज्ञेया ।

यो न दत्ते सुपात्रेभ्यः, प्रासुकं दानमञ्जसा ।
न तस्यात्मभरेः कोऽपि, विशेषो विद्यते पशोः ॥६७॥

पिता रत्नाकरो यस्य, लक्ष्मी यस्य सहोदरी ।
शंखो भिक्षाटनं कुर्याद्, नादत्तमुपतिष्ठते ॥६८॥

तुर्यं षष्ठं निजायस्य, विभागं धर्मकर्मणे ।
न करोति स ना कुक्षि-भरिर्वृक्षादतिरिच्यते ॥६९॥

दातुःसप्तगुणान् प्राह-

श्रद्धा भक्तिरलोभत्वं, दया शक्तिः क्षमा परा ।
विज्ञानं चेति सप्तैते, गुणा दातुः प्रकीर्तिताः ॥७०॥

श्रद्धा तुष्टि भक्ति विज्ञान-मलुब्धता क्षमा शक्तिः ।
यत्रैते सप्त गुणास्तं, दातारं प्रशंसन्ति ॥७१॥

भाक्तिकं तौष्टिकं श्राद्धं, संविज्ञानमलौल्यकं ।
सात्त्विकं क्षमकं सन्तो, दातारं सप्तधा विदुः ॥७२॥

श्रद्धाऽऽस्तिक्यमतिः सुतुष्टिरमलाऽऽनन्दस्तु भक्ति र्गुरोः ।
सेवालोलुपता विधौ कुशलता, विज्ञानमर्थव्यये ।
निर्लोभत्वमलोभताऽप्युपशमोत्कर्षः क्षमा सर्वदा,
द्रव्यत्यागविधौ न नास्ति वचनं शक्तिस्तु सप्तोदिताः ॥
पात्रापात्रसमायाते, गुणदोषविशेषकः ।
ज्ञानवान् स भवेद् दाताः गुणैरभिः समन्वितः ॥७३॥

श्रद्धागुणमाह-

चित्तरागो भवेद् यस्य, पात्रं लब्धं मया ऽधुना ।
पुण्यवानहमेवेति स श्रद्धावानिहोच्यते ॥७५॥
अद्याचिन्त्यमहाफलेन फलितो, मत्पुण्यकल्पद्रुमः,
संसारोदधिमज्जता च कलितं, संयानपात्रं मया ।
विद्याद्याम्बरगामिनी शिवपुरे, गन्तुं च लब्धा मया,
सत्साधुर्यदयं तपःकृशवपुः, प्राप्तो मदीये गृहे ॥७७॥
अद्याऽहं सफलो जातः, फलितो मे शुभद्रुमः ।
कल्पवृक्षादयो लब्धाः, प्राप्त पात्रं यदीदृशम् ॥७८॥

भक्तिगुणमाह-

आभुक्ते वं रपात्रस्य, सन्निधौ व्यवतिष्ठते ।
तदङ्घ्रिसेवनां कुर्वन्, सा भक्तिः परिकीर्तिता ॥७९॥

पापोच्चयं मम निवारयितुं समर्थं,
हन्तुं दरिद्र मिवमाशु समर्थमेव ।

दातुं सुपुण्यमजकं रतिरद्वितीया,

श्रद्धेति तत्र मुनयः खलु तां वदन्ति ॥८०॥

आभुक्ते मुनिसन्निधौ शुभमतिः, स्थित्वा विशोध्यामलान्,
आहारान् परिहार्य वीक्ष्य सततं, मार्जारकोटादिकान् ।
भुक्त्यन्ते परिणम्य साधु हृदि सं–तृप्तो भवेद् यः पुमान्,
दाता तन्मुनिसेवनेयमुदिता, भक्तिश्च सा पुण्यदा ॥८१॥

आभुक्ते वरपात्रस्य, सन्निधौ ह्यत्रतिष्ठते ।
तत्सेवनं प्रकुरुते, सा भक्तिः परिकीर्तिता ॥८२॥

अलुब्धतागुणमाह–

अमुष्मादस्ति मे कार्य–मस्मै दानं ददाम्यहं ।
ईदृग्मनो न यस्यास्ति स, तदा नैव लोभवान् ॥८३॥

यावद्गोमयमस्त्यदस्ति विमलं, क्षेत्रं फलत्यद्भुतं,
भूरिग्रासवतीव गौः क्षरति सु– क्षीरं घटापूरितं ।
वर्षं तृप्तिकरं रसेष्टवसुधो, यत्पात्रसौहित्यकृत् ,
तद्दानं सफलं स एव सफलो, दाताऽप्यलुब्धो महान् ॥

यत्वंचनं संस्तवमन्त्रविद्या
ममत्वबुद्ध्याविफलानप्रेक्षं
वितीर्यते शासनवर्धनार्थं,
मलुब्धता तां परिपूर्णयन्ति ॥८५॥

तुष्टिगुणमाह-

यथा चन्द्रोदये जाते, वृद्धि याति पयोनिधिः ।
सतां हृदयतोयाब्धिव, मुनिचन्द्रोदये तथा ॥८६॥

व्याकोशवारिजविकाशिविलोचने यत् ।
पीयूषपानबहुलोद्घुषिताङ्गकं च ।
आराध्य सद्गुणभरग्रहणे मति र्या,
सा तुष्टि रित्यकथि, पुण्य सुतोष पात्रम्

दयागुण माह-

कार्यं प्रति प्रायातीति, कीटकादीन् विलोकयन् ।
गृहमध्येप्रयत्नेन, स तदा स्याद् दयापरः ॥८८॥

शक्तिगुणमाह-

ये जीमन्ति रुचीष्ट वस्तु बलवद्, दाता च तद् दापयन्,
यद्वाच्छन्ति तदेव नास्ति च वचोऽयक्ता न वाचा हृदा ।
कायेनापि मनोमुदा ददद्वे-दं वस्त्विदं संवदन्,
शक्तः सोऽपि महाद् बुधोऽतिसुकृतिः स्याद् दानसोब्बोऽनघः ॥

सर्वमाहारमश्नाति, ग्राहको बहुभोजकः ।
इत्येतन्नास्ति यत्रैव, सा शक्तिः परिकथ्यते ॥९०॥

तुर्यांशो षडांशो वा दशांशो वा निजार्थतः ।
दीयते या तु सा शक्ति, र्वर्ण्यावित्याकलोऽसौ ॥९१॥

विज्ञानगुणमाह-

सात्म्यं सुव्रतरक्षणं पदमलं, सेव्यं त्वसेव्योज्झितं,
यद्दुर्दोषहरं यथामयहरं, यन्मानसंस्थामाकृत् ।
यन्निद्रादिहरं यदव्ययमनु-स्वाध्यायसंपत्करं,
पूतं यद् व्रतिहस्तदत्तमशनं, विज्ञाय दद्याद् यतेः ॥९२॥

यद् दीयते किमपि कालबलं विविच्य,
पात्रस्य च प्रकृतिमप्यवगम्य देशं ।
रत्नत्रयस्य परिवृद्धिकरं च कल्प्यं,
विज्ञानमेतदनुयुञ्जुरनिन्द्यबोधाः ॥९३ ।

क्षमागुणमाह-

पुत्रदारादिभिर्दोषे, कृतेऽपि च न कुप्यति ।
यः पुनर्दानकालेऽसौ क्षमावानिति भण्यते ॥९४॥

आहारग्रहणनिषिद्धपुरुषमाह-

असम्मताऽभक्तकदर्यमर्त्य-कारुण्यदैन्यातिशयान्वितानां ।
एषां निवासेषु हि साधुवर्गः, परानुकम्पाहितयोर्न भुङ्क्ते ।
नाहरन्ति महासत्वा, क्षिप्तेनाप्युकम्पिताः ।
किन्तु ते दैन्यकारुण्य संकल्पोज्झितवृत्तयः ॥९५॥

कदर्यस्य लक्षणमाह-

आत्मानं धर्मकृत्यञ्च, पुत्रदारांश्च पीडयन् ।
यो लोभात् सञ्चिनोत्यर्थं, स कदर्य इति स्मृतः ॥

परहस्तदानफलमाह–

आत्मवित्तपरित्यागात्, परैः धर्मविधापने ।
निःसन्देहमवाप्नोति, परभोगाय तत्फलम् ॥१॥

स्वहस्तदानफलमाह–

भोज्यं भोजनशक्तिश्च, रतिशक्तिर्वरस्त्रियः ।
विभवो दानशक्तिश्च, स्वयं धर्मकृतेः फलम् ॥२॥

धर्मेषु स्वामिसेवायां, सुतोत्पत्तौ च कः सुधीः ।
अन्यत्र कार्यदैवाभ्यां, प्रतिहस्तं समादिशेत् ॥३॥

अन्यायेनाऽऽगतं दत्त–मन्यदीयं हि निष्फलं ।
तेन स्वकीयं दातव्यं, स्वामिनेति निवेदितम् ॥४॥

अथ न्यायागतं कल्प्यं, देयमुक्तं न चापरं ।
युक्तं तदुक्तं बोधव्यं, मध्यस्थैः शुद्धबुद्धिभिः ॥५॥

धनेन तेन किं साध्यं, हिंसाद्यादिप्रजेन हि ।
पात्रदानादिहीनेन, येन श्वभ्रं प्रजायते ॥६॥

विनयवचनयुक्तः शान्तिकान्तानुरक्तः,
नियतकरणवृत्तिः संघजातप्रसक्तिः

शमितमदकषायः, शान्तसर्वान्तरायः

स विमलगुणश्लिष्टः, दातृलोके विशिष्टः ॥७॥

दानलक्षणमाह-

यद् ददाति निकृन्तन्ति व्यसनानि तद्दानं निदानविकलं दानमरोनपि मित्राणि करोति । कष्टं विदूरयति, अनिष्ट वारयते, मार्तण्ड मूर्तिरिव समस्तं सतमस निवारयति । पानीयपूर्णा सरसीव सरोज खण्डान् उक्तगुणान् प्रोल्लासयति । अनुग्रहार्थम् स्वस्यातिसर्गोदान ।

स्वपरानुग्रहलक्षणमाह-

रत्नत्रयोच्छ्रयो भोक्तुर्दातुः, पुण्योच्चयः फलं ।

मुक्त्यन्तचित्राभ्युदय-प्रदत्वं तद्विशिष्टता ॥८॥

आत्मनः श्रेयसेऽन्येषां, रत्नत्रयसमृद्धये ।

स्वपरानुग्रहायेत्थं यत्, स्यात् तद्दानमिष्यते ॥९॥

यथा कृषीवला वृष्टिर्जाता इति सश्रुतेः देहसौख्य परित्यज्य क्षेत्र गत्वा बीज वपन्ति, तथा दातारः पात्रागमन सश्रुत्य ज्ञानवृष्टिकारिणे पात्राय इष्टान्यन्नानि सादर वितरन्ति ॥

चतुर्विधाय संघाय, दानं चैव चतुर्विधं ।

दातव्यं सर्वदा सद्भिः, श्चिन्तकैः पारलौकिकं ॥१०॥

गौरवं प्राप्यते दानात्, न तु वित्तस्य सञ्चयात् ।

स्थितिरुच्चैः पयोदानां, पयोधिनामधः स्थितिः ॥११॥

दानं लोकान् वशीकर्तुम्, प्रथमं कारणं मतम् ।
दानं गुरुत्वहेतु च, कुलजातिप्रकाशकम् ॥१२॥

अतुलगुणनिधानं स्वर्गमोक्षैकद्वारं
सकलसुखसमुद्रं, पापवृक्षानलं वै,
स्वपरगुणनिधानं, सर्वसात्रूपकारं ।
कुरु मुनिजनदानं, त्वं सदा मुक्तिहेतोः ॥१३॥

प्रशसनीयदानलक्षणमाह-

यथाविधि यथादेशं, यथाद्रव्यं यथागमं ।
यथापात्रं यथाकालं, दानं देयं गृहाश्रमैः ॥१४॥
यथाकालं यथादेशं, यथापात्रं यथोचितं ।
दानेनेत्थं बुधाः कुर्युः, शासनस्य प्रभावनाम् ॥१५॥
तस्यैव सफलं जन्म, तस्यैव सफला क्रिया ।
सफलं गृहधान्यादि, येन दानं कृतं शुभम् ॥१६॥

तीर्थोन्नतिः परिणतिश्च परोपकारे,
ज्ञानादिनिर्मलगुणावलिकाभिवृद्धिः ।
वित्तादिवस्तुविषये च विनाशबुद्धिः,
सम्पादिता भवति दानवताऽऽत्मशुद्धिः ॥१७॥

मुनिभ्यः शाकपिण्डोऽपि, भक्त्या काले प्रकल्पितः ।

मवेदगण्यपुण्यार्थं, भक्तिश्चिन्तामणि र्यतः ॥१८॥
धर्मधारकगात्राय, धर्मार्थं येन दीयते ।
यद्द्रव्यं दानमित्युक्तं, सद्धर्मार्जनपण्डितैः ॥१९॥
हितार्थं बान्धवे दानं, शोभार्थं दानयाचके ।
मोक्षार्थं साधवे दानं, भीतार्थं दानभूपतौ ॥२०॥
यद्दत्तं तदमुत्रस्या–दित्यसत्यपरं वचः ।
गावः पयः प्रयच्छन्ति, किं न तोयतृणाशनाः ॥२१॥

त्रिविधदानफलमाह–

उत्तमं सात्त्विकं दानं, मध्यमं राजसं भवेत् ।
दानानामेव सर्वेषां, जघन्यं तामसं पुनः ॥२२॥
आतिथेयं स्वयं यत्र, यत्र पात्रनिरीक्षणं ।
गुणाः श्रद्धादयो यत्र, दानं तत्सात्त्विकं विदुः ॥२३॥
यदात्मवर्णनप्रायं, क्षणिकाहार्यं विभ्रमं ।
परप्रत्ययसंभूतं, दानं तद्राजसं मतम् ॥२४॥
पात्रापात्रसमावेक्ष्य–मसत्कारमसंस्तुतं ।
दारभृत्यकृतोद्योग, दानं तामसमूचिरे ॥२५॥

अतो मनुष्यभवं श्रावकधर्मम् च प्राप्य ये जिनार्चायां, जिनागारे, जिनविम्बे, तीर्थयात्रायां, जिनप्रतिष्ठाया, जीर्णचैत्यालयोद्धारे

सत्पात्रदाने न्यायेनोपार्जितं धन व्ययन्ते त एव प्रशस्तगृहस्था ज्ञेया । सप्त क्षेत्रनामानि प्राह–

**जिनबिम्बं जिनागारं, जिनयात्रा प्रतिष्ठितं ।**
**दानं पूजा च सिद्धान्त–लेखनं क्षेत्र सप्तकम् ॥२६॥**

दानिनामिहलोके कीर्तिः प्रताप भाग्य बुद्धिरित्यादिकं फल जायते, परभवे च भोगभूमिजान् भोगान् भुक्त्वा देवालयं यान्ति । किन्तु यः सम्यग्दृष्टिः सत्पात्रदान ददाति स षोडशतमनाकजां लक्ष्मी प्राप्य तीर्थंकृच्चक्रिशक्राणा वचोऽगोचर सुखं प्राप्नोति । दृष्टिहीनोऽपि यो वारमेक सत्पात्रदानं दत्वा तेन दानप्रभावेन भोगभूमिसुखं प्राप्य स्वर्गम् गच्छति, अत. सद्गृहस्थेन दान यथाशक्ति सदा देयम् । उत्कृष्टपात्रदानेनोत्कृष्टभोगभूमिसुख, मध्यमपात्रदानेन मध्यमभोगभूमिसुखं, जघन्यपात्रदानेन जघन्य-भोगभूमिसुख लभ्यते । सुपात्रे विनियोजित धन परत्र अनन्तगुणं भवति ।

**किमत्र बहुनोक्तेन, लेशतोऽपि गुणप्रदं ।**
**वस्तु संयमिने भक्त्या, दत्तमनन्तसुखदम् ॥२७॥**

**न्यग्रोधस्य यथा बीजं, स्तोकं सुक्षेत्रभूमिग ।**
**बहुविस्तीर्णतां याति, तद्वद् दानं सुपात्रगम् ॥२८॥**

**पात्रे दत्तं भवेदन्नं, पुण्याय गृहमेधिनां ।**
**शुक्तावेव हि मेघानां, जलं मुक्ताफलं भवेत् ॥२९॥**

अथ नव पुण्यानि प्राह-

प्रतिगृहोच्चसंस्थानं, पादक्षालनमर्चनं ।
प्रणामयोगशुद्धिस्तु, चैषणाशुद्धिरेव हि ॥३०॥
अमीभिर्नवधा पुण्यं–रर्जनीयं महद्वृषं ।
प्रतिपत्त्या गृहस्थैश्च, दानकाले सुखार्णवम् (युग्मं)॥३१॥
आगच्छन्तं समालोक्य, वदान्यो यत्र तत्र यत् ।
जिनवत् प्रतिगृह्णाति, स प्रतिग्रह उच्यते ॥३२॥
यत्प्राक्सुसंस्कृतं यच्च, स्थानं पूर्णमनोरथं ।
यत्पात्रस्थापनं तस्मिन्नुच्चैःस्थानं तदुच्यते ॥३३॥

यत्पादपद्मरजसाऽपि धराऽस्ति तीर्थं,
तेषां जगन्नलिनबोधनभास्कराणां ।
तत्क्षालनं चरणयोरघजातहन्तृ,
पादोदकं शमयतान् मम तद्भवाग्निम् ॥३४॥

प्रतिगृहीतपात्रस्य, मन्त्रमुख्यैर्जलादिभिः ।
अष्टाभिः प्रार्चना या सा, पूजा पूज्यै निरुच्यते ॥३५॥
प्रमत्तादिगुणस्थान–मुनिसंभावनाधिकं ।
पात्रेऽर्चिते नति या तु, स प्रणामोऽभिधीयते ॥३६॥
यद्दुश्चिन्तापरित्यागाद्, गुणानुष्ठानपूर्वकं ।

पात्रदाने मनःस्वास्थ्यं, सा मनःशुद्धि रुच्यते ॥३७॥
अयोग्यवचनत्यागात्, समाश्रितमनोहरा ।
पात्रदाने प्रियोक्तिर्या, सा वचःशुद्धि रिष्यते ॥३८॥
यथादेशं यथाकालं, पवित्रावयवांशुकः ।
यद्दत्ते संयमयुक्तः, कायशुद्धिमंता तु सा ॥३९॥

यत्स्वकल्प्यमवगम्यतेऽनघं,
नित्यकर्मपरिवर्धनोचितम् ।
सात्म्यकं ददतु योग्यसाधितं,
दातुरन्नस इयं विशुद्धिता ॥४०॥

दानभेदान प्राह–

आहूय कृतयुगे दानं, त्रेतायां गृहमागते ।
द्वापरे याचितं दानं, सेवादानं कलौ युगे ॥४१॥
याचितं शतगुणं पुण्यं, लक्षपुण्यमयाचितं ।
गुप्तकं कोटिपुण्याय, सेवादानं च निष्फलम् ॥४२॥
वाग्दत्तं मनोदत्तं, धारादत्तं न लुप्यते ।
नरकान् न निर्वर्तन्ते, यावच्चन्द्रविवाकरौ ॥४३॥

दानप्रशंसामाह–

दानेन प्राप्यते स्वर्गो, दानेन सुखमश्नुते ।
इहामुत्र च दानेन, पूज्यो भवति मानवः ॥४४॥

दानेन भूतानि वशीभवन्ति, दानेन वैराण्यपि यान्ति नाशं ।
परोऽपि बन्धुत्वमुपैतियस्मात्, तस्मात सुदानं सततं प्रदेयं ।।
दानेन विशदा कीर्ति, भ्रमत्येव जगत्त्रये ।
दानेन दानिनां पुण्यं, जायते चाद्भुतं सुखम्, ।।४६।।
दानं ख्यातिकरं सदा हितकरं संसारसौख्याकरं
नृणां प्रीतिकरं गुणाश्रयकरं लक्ष्मीकरं किङ्करं ।
स्वर्गावासकरं गतिक्षयकरं निर्वाणसम्पत्करं,
पुष्टायुर्बलबुद्धिवर्धनकरं दानं प्रदेयं बुधैः ।।४७।।
''दानेन पुण्यमाप्नोति, प्रसिद्धं कुलमप्यहो''
दुर्व्यापारशतेषु सत्सु, गृहिणः पापं यदुत्पद्यते ।
तन्नाशाय शशाङ्कशुभ्र–यशसे दानं न चान्यत् परम् ।।
इति मत्वा शुभं दानं, सदा देयं महोदयैः ।
येन स्वर्गादिजं सौख्यं, भुक्त्वा भव्यः शिवीभवेत् ।।४९।।
मादुपिदुपुत्तमित्तं, कलत्तधणधण्णवत्थुवाहणविहवं ।
संसारसारसोक्खं, सव्वं जाणउ सुपत्तदाणफलं ।।५०।।
सत्तंगरज्जणवणिहि, भंडारछडंगवलचउदसरयणं ।
छण्णवदि सहस्सोत्थ, विहवं जाणउ सुपत्तदाणफलं ।।
सुकुलसुरुवसुलक्खण, सुमइ सुशिक्खा सुशीलचारित्तं ।

सुहलेस्सं सुहणाम सुहसादं सुपत्तदाणफलं ॥५१॥

इहपरलोयणिरीहो, दाणं जो देदि परमभत्तीए ।
रयणत्तए सुठविदो, संघो सयलो हवे तेण ॥५२॥

उत्तमपत्तविसेसे, उत्तमभत्तीए उत्तमं दाणं ।
एयदिणे वि य दिण्णं, इंदसुहं उत्तमं देदि ॥५३॥

दानपालयोर्मध्ये, दानात् श्रेष्ठं हि पालनं ।
दानात् स्वर्गमवाप्नोति, पालनादच्युतं पदम् ॥५४॥

दानभेदानप्राह–

पात्रदानं कृपादानं, समदानं ततः परम् ।
परमान्वयदानं चेत्युक्तं दानं चतुर्विधम् ॥५५॥

पात्रलक्षणमाह–

पात्रं तत् पात्रवज्ज्ञेयं, विशुद्धगुणधारणात् ।
यानपात्रमिवाभीष्टे, देशे सम्प्रापकं च यत् ॥५६॥

यत्तारयति जन्माब्धेः, स्वाश्रितान् यानपात्रवत् ।
मुक्त्यर्थगुणसंयोग–भेदात् पात्रं त्रिधा मतम् ॥५७॥

चतुर्धा दीयते देयं, पात्राय त्रिविधाय यत् ।
त्रिशुद्धया तद्गुणप्रीत्या, पात्रदानं तदिष्यते ॥५८॥

पात्रदाने फलं मुख्यं, मोक्षः सस्यं कृषेरिव ।

पलालमिव भोगस्तु फलं स्यादानुषङ्गिकम् ॥५९॥

अनुकम्पादानमाह—दीनेभ्योऽनाथेभ्यो दुःखितेभ्यो रोगपीडितेभ्यः क्लिष्टेभ्यो यद्दानं दीयते तत् कृपादानमुच्यते ।

रोगबन्धनदारिद्रया—द्यापद्व्याप्तहतात्मनां ।
दीयते कृपया यत्तत्, कृपादानमिहोच्यते ॥६०॥
पुण्यादिहेतवेऽन्योऽन्यं, गृहस्थैर्यद् वितीर्यते ।
ताम्बूलाहारवस्त्रादि, समदानमभाणि तत् ।
मोक्षायोत्तिष्ठमानो यत्, स्वपुत्राय स्वसम्पदं ।
दत्ते कुटुम्बपोषणा—यान्वयदानं तदुच्यते ॥६१॥
सत्पात्रदाने भुवनत्रयेऽपि, प्रोद्दीप्तकीर्तिकृतिपूर्णं लोकान ।
जैनप्रभक्तानभिवृद्धिसौख्यान, शंसन्ति देवाश्च नराश्च नागा।

देयान्नलक्षणमाह-

प्रासुकं मधुरं स्निग्धं, भक्तभक्षादिभोजनं ।
भावेन मुनये दत्तं, न पुण्यं स्यादतः परम् ॥६३॥
रसाढ्यं प्रासुकं हृद्यं, तपोवृद्धिविधायकं ।
बह्वर्थं व्यञ्जनोपेतं, देयं भक्तं च दुर्लभम् ॥६४॥
दातृपात्रविधिद्रव्य—विशेषात्तद् विशिष्यते ।
यथा घनाघनोद्गीर्णं, तोयं भूमिसमाश्रयम् ॥६५॥

दाताऽनुसमसंपन्नः, पात्रं रत्नत्रयोचितं ।
सत्कारः स्याद् विविद्रव्यं, तच्च श्लाघ्यावसाधकम् ॥
दातुर्विशुद्धता देयं पात्रं च प्रपुनाति सः ।
शुद्धिर्देयस्य दातारं, पुनीते पात्रमप्यदः ॥६७॥
पात्रस्य शुद्धि र्दातारं, देयं चैव पुनात्यतः ।
नवकोटिविशुद्धं तद् दानं भूरिफलोदयम् ॥६८॥

अन्न पवित्रं सन् दातार पात्र च पवित्र करोति, दातृशुद्धः सन्–अन्न पात्र च पवित्रं विदधाति, पात्रशुद्ध सत्—दातार अन्नं च शुद्धं करोति । अन्नशुद्धिमाह—मकारत्रयरहित जलतैलघृतचर्मभि-रस्पृष्ट रात्रावकृत,चाण्डालादिनीचलोकमार्जारशूनकादिस्पर्शरहितं शुद्धमन्नमुच्यते ।

वस्त्रदानफलमाह–

आर्येभ्यः आर्यिकाभ्यश्च, वस्त्रदानेन धीधनः ।
अरजोऽम्बरधार्यस्ति, शुक्लध्यानी भवान्तरे ॥६९॥

कमण्डलुदानफलमाह–

दानात् कमण्डलोः पात्रे, निर्मलाङ्गः शुचिव्रतः ।
मयूरबर्हदानेन, सुपुत्रश्चिरजीवितः ॥७०॥

अदेयलक्षणमाह–

विवर्णं विरसं विद्ध–मसात्म्यं प्रसृतं च यत् ।
मुनिभ्योऽन्नं न तद्देयं, यच्च भुक्तं गदावहम् ॥७३॥
उच्छिष्टं नीचलोकार्हं–मन्योद्दिष्टं विगर्हितं ।
न देयं दुर्जनस्पृष्टं, देवयक्षादिकल्पितम् ॥७४॥
ग्रामान्तरात् समानीतं, मन्त्रानीतमुपायनं ।
न देयमापणक्रीतं, विरुद्धं वाऽयथर्तुकम् ॥७५॥
दधिसर्पिपयोभक्ष्य–प्रायं पर्युषितं मतं ।
गन्धवर्णरसभ्रष्ट–मन्यत् सर्वं विनिन्दितम् ॥७६॥

निन्द्यदानलक्षणमाह–

मायाऽहङ्कारलज्जाभिः, प्रत्युपक्रियया ऽथवा ।
यत् किञ्चिद् दीयते दानं, न तद् धर्मस्य साधनम् ॥
हिंसार्थत्वान् न भूगेह–लोहगोऽश्वादि नैष्ठिकः ।
दद्यान् न ग्रहसङ्क्रान्ति–श्राद्धादौ च सुदृग्द्रुहि ॥७७॥

कुदानं—कुत्सितं दानं कुदानं निन्द्यदानमित्यर्थम् कुपात्रापात्रयो र्दानं कुदानमुच्यते, । तद्भेदा दश कन्याहस्तिसुवर्णघोटकगो दासी तिलरथभूम्यादीनि कुदानानि स्वस्य परस्य दुःखोत्पादकानि हिंसादिकारणाणि श्वभ्रदानि मूढमिथ्यादृष्टिभिः प्रवर्तितानि भव भ्रमणकारणानि, पापबन्धकारणाणि सम्यग्दृष्टिभिः प्राणान्तेऽपि न देयानि ।

कनकाश्वतिला नागो, रथो दासी मही गृहं ।
कन्या च कपिलाधेनु-र्महादानानि वै दश ॥७८॥

किन्त्वेतेषां कुदानानां फलमाह—अन्तरद्वीपस्थकुभोगभूमिषु जन्म जायते नरकादिषु च उत्पद्यतेऽतः कुपात्रेभ्यो दानं कदापि न देयं। अपात्रकुपात्रेभ्यो दानदाता पाषाणनौकाऽऽरुढ इव दुस्तरे भवाब्धौ निमज्जति परत्रेह च दुःख प्राप्नोति ।

न हि लोहमयं यान-पात्रमुत्तारयेत् परं ।
तथा कर्मभराक्रान्तो, दोषवान् नैव तारकः ॥७९॥
एकवापीजलं यद्वद्, ईक्षुमधुरतां व्रजेत् ।
निम्बे कटुकतां याति, पात्रापात्रविशेषतः ॥८०॥
मेघनीरं यथा भूमिं, ईक्षुनिम्बादिकं भवेत् ।
प्राप्य दानं तथा ज्ञेयं, पात्रापात्रेषु योजितम् ॥८१॥

अपात्रलक्षणमाह-

ये दर्शनतपोव्रतधर्मादिहीना इन्द्रियविषयलोलुपा स्वेच्छाचारिणः कुमार्गगा कषायबहुलास्तेऽपात्रा ज्ञेयाः ।

यत्र रत्नत्रयं नास्ति, तदपात्रं विदुर्बुधाः ।
उप्तं तत्र वृथा सर्व-मूषरायां क्षिताविव ॥८२॥
उप्तं यथोषरे क्षेत्रे, बीजं भवति निष्फलं ।
तथाऽपात्रेषु यद्दानं, तद्दानं निष्फलं भवेत् ॥८३॥

अपात्रदानतः किञ्चित्, न फलं पापतः परं ।
लभ्यते हि फलं खेदो, बालुकापुञ्जपेषणे ॥८४॥
कुमानुषत्वमाप्नोति, जन्तुर्ददपात्रके ।
अशोधितमिवालम्बु, तद्धि दानं प्रदूषयेत् ॥८५॥
आमपात्रे यथा क्षिप्तं, मङ्क्षु क्षीरादि नश्यति ।
अपात्रे तथा दत्तं, तद्धि स्वं तच्च नाशयेत् ॥८६॥

अथ कुपात्रलक्षणमाह-

ये दर्शनहीनास्तपोव्रतधराः पञ्चाग्निसाधका दण्डयादय एते कुपात्रा ज्ञेयाः ।

कुपात्रदानेन भवेद् दरिद्रः, दारिद्रदोषेण करोति पापं।
पापाधिकारी नरकं च गच्छेत्, पुन र्दरिद्रः पुनरेव पापी ॥
तृणाहारी पयः स्रावी, पयोहारी विषस्रवी ।
तथाऽपात्र सुपात्राणां, दानं पन्नगधेनुवत् ॥८८ ।
पात्रापात्रविशेषोऽस्ति, धेनुपन्नगयोरिव ।
तृणाज्जायते क्षीरं, क्षीरात् संजायते विषम् ॥८९॥

व्यर्थदानमाह-

वृथा वृष्टिः समुद्रेषु, वृथा तृप्तेषु भोजनं ।
वृथा दानं धनाढ्येषु, वृथा दीपो दिवाऽपि च ॥९०॥

चतुर्थदानभेदान् प्राह-

अभयाहारभैषज्य-श्रुतभेदाच्चतुर्विधम् ।
दानं मनीषिभिः प्रोक्तं, भक्तिशक्तिसमाश्रयम् ॥९१॥

दानमाद्यमभयं भयमुक्तैः ।
व्याहृतं तदनु चाहृति नाम ।
ज्ञानसंज्ञमथ भेषजरूपम्
तच्चतुर्थमिति मुक्तिनिमित्तम् ॥९२॥

चतुर्दानफलमाह-

सौख्यमभयादाहु-राहाराद् भोगवान् भवेत् ।
आरोग्यमौषधाज्ज्ञेयं, श्रुतात् स्याच्छ्रुतकेवली ॥९३॥

ज्ञानवान् ज्ञानदानेन, निर्भयोऽभयदानतः ।
अन्नदानात् सुखी नित्यं, निर्व्याधिर्भेषजाद् भवेत् ॥

निर्भयोऽभयदानेन, रूपेण मकरध्वजः ।
आयुषा निरवद्येन, भोगवान् भोजनेन च ॥९५॥

आहाराद् भोगवान्, वीरोऽभयदानाच्च भेषजात् ।
नीरोगी शास्त्रदानाच्च, भवेत् केवलबोधवान् ॥९६॥

चतुर्दानस्वामिन प्राह-

कौण्डेशो ज्ञानदानेन, आहारेणैव यशोमतिः ।
औषधेवृषभदत्ताख्यो, दयादानेन सूकरः ॥१॥

आहारौषधजीवरक्षणपरि-ज्ञानानि ये श्रावकाः,
पात्रेभ्यो वितरन्ति भावसहिताः स्वीकृत्य जैनं व्रतं ।
ते विद्याधरचक्रवर्तिपदवीं, भुक्त्वा सुराणां श्रियं,
भुञ्जानाः परमार्थसौख्यमतुलं गच्छन्ति मोक्षालये ॥

अभयदानप्रशंसामाह–

रुजा परीताः परतन्त्रजीविताः,
सुदुर्भगा दुर्गतदीनदुर्धियः ।
सदा कदर्थ्याश्च परै विमानिताः,
जिजीविषन्त्येव तथाऽपि जन्तवः ॥३॥
नाकनेतुरिव नाकविभोगैः,
कीटकस्य शकृदन्तरितस्य ।
जीविताध्यवसतिः सदृशी स्यात्,
मृत्युभीतिरपि तुल्यतमैव ॥४॥

भानुभ्रष्टमहो यदि प्रभुमृते, राज्यं च संजायते,
राजीवं च जलाशयेन रहितं, चित्रं तथाऽपाश्रयम् ।
पुंमामापगतकुलं यदि धरा–हीनस्तथाऽनोकुहा
प्राणित्राण विवर्जितोऽहि नियतं, जायेत धर्मस्तदा ॥

वदतु विशदवर्णं पातु शीलं प्रपूर्णं,

जयतु विशदवर्णं कान्तरूपाणि कुर्यात्

तपतु तप उदीर्णं नीरसं वास्तु जीर्णम्,

विफलमभयतीर्णं यस्य नो बोधलीनम् ॥६॥

यथा शरीरं न हि जीववर्जितं,

मुखारविन्दं न यथाऽपलोचनं ।

यथा विहीनं क्रियमाणमर्थिभिः ।

न धर्मकर्माऽपि विराजते तथा ॥७॥

अभयं सर्वसत्त्वाना—मादौ दद्यात् सुधीः सदा ।

तद्धीने हि वृथा सर्वः, परलोकोचितो विधिः ॥८॥

दानमन्यद् भवेन्मा वा नरश्चेदभयप्रदः ।

सर्वेषामेव दानानां, यतस्तद् दानमुत्तमम् ॥९॥

तेनाऽधीतं श्रुतं सर्वं, तेन तप्तं तपः परं ।

तेन कृत्स्नं कृतं दानं, यः स्यादभयदानवान् ॥१०॥

न गोप्रदानं न महीप्रदानं

न चान्नप्रदानं हि तथा प्रधानं ।

यथा वदन्तीह महाप्रधानम्,

सर्वप्रदानेष्व—भयप्रदानम् ॥११॥

यो दद्यात् काञ्चनं मेरुः, कृत्स्नां चापि वसुन्धरां ।

एकस्य जीवितं दद्यात्, न तुल्यं हि श्रेणिक! ॥
कामं रूपेण योनैः सुरपतिसदृश—स्त्यागतः कर्णमुख्यं,
तारेशं कायकान्त्या रविमपि महसा, मारुतं साहसेन ।
मां धातारं जयन्तः शुचिमतिकरणाश्चैर्यवीर्येण सत्वेन धर्मं
कीर्तिव्याप्तत्रिलोका अभयवितरणात् पुण्यवन्तस्तपन्ति ॥
गौरीशाविव मर्त्यभिन्नतनवः, तारुण्यमञ्जूषिका,
गोत्राकाशविरोचनोपमसुतोत्—पत्त्या स्तुतोत्पत्तयः ।
रूपस्याधयवो नयस्य निलयः शीलस्यवेला इव,
प्राणित्राणसमाश्रयात् चिरतरं, रजन्ति रामाजने ।
अभीतिदानपुण्येन, जायते ज्वरवर्जितः ।
महासङ्कटयातोऽपि, निष्कम्पत्वविग्रहः ॥१५॥
नाभीतिदानतो दानं, समस्ताधारकारणं ।
महीयो निर्मलं विश्वं, गगनादिव विद्यते ॥१६॥
चामीकरमयीमुर्वी, दद्यात् पर्वतैः सह ।
एकजीवाभयं नूनं, ददानस्य समः कुतः ॥१७॥
सर्वेषां देहिनां दुःखात्, बिभ्यतामभयप्रदः ।
दयार्द्रो दातृधौरेयो, निर्भीः सौख्यमश्नुते ॥१८॥
तदस्ति न सुखं लोके, न भूतो न भविष्यति ।

यन्न संपद्यते सद्यो, जन्तुरभयदानतः ॥१९॥
धर्मार्थकाममोक्षाणां, जीवितं मूलमिष्यते ।
तद्रक्षता न किं दत्तं, हरता तन्न किं हृतम् ॥२०॥
धर्मार्थकाममोक्षाणां, जीतिव्ये यतः स्थितिः ।
तद् दानतस्ततो दत्ता, सर्वे सन्ति देहिनाम् ॥२१॥
देवेंरुक्तो वृणीष्वैकं, त्रैलोक्यप्राणितव्ययोः ।
त्रैलोक्यं वृणुते कोऽपि, न परित्यज्य जीवितम् ॥२३॥
त्रैलोक्यं न यदो मूल्यं, जीवितव्यस्य जायते ।
तद्रक्षता न यतो दत्तं, प्राणिनां किं न काङ्क्षितम् ।
गोबालब्राह्मणस्त्रीतः पुण्यभागी यदोच्यते ।
सर्वप्राणिगणत्रायी, नितरां न तदा कथम् ॥२४॥
यद्येकमेकदा जीवं, त्रायमाणः प्रपूज्यते ।
न तदा सर्वदा सर्वं, त्रायमाणः कथं बुधैः ॥२५॥
मनोभूरिव कान्ताङ्गः, सुवर्णाद्रिरिव स्थिरः ।
सरस्वानिव गम्भीरो, विवस्वानिव भास्वरः ॥२६॥
आदेयः सुभगः सौम्य-स्त्यागी भोगी यशोनिधिः ।
भवत्यभयदानेन, चिरजीवी निरामयः ॥२७॥
दीर्घायुष्कः [illegible], [illegible],

सद्विद्याश्रीकुलबलधन, प्रीतिकीर्तिप्रतापः,
शूरो धीरः स्थिरतरमनाः, निर्भयश्चारुरूपः
त्यागी भोगी भवति भविनां, देहभीतिप्रदायी ॥२८॥
तीर्थकृच्चक्रिदेवानां, सम्पदो बुधवन्दिता ।
क्षणेनाभयदानेन, दीयन्ते दलितापदः ॥२९॥
फलं नाभयदानस्य, वक्तुं केनाऽपि पार्यते ।
यस्याऽऽकण्यं मुखे जिह्वा, ध्याप्रियन्ते सहस्रशः ॥३०॥
सततमभयदानाद्, निर्भयो निर्जितारिः,
त्रिभुवनजननेत्रेन्दीवरानन्दचन्द्रः ।
स्वजनसुखमहौजः कामिनीनां मनोज्ञः,
स भवति परमश्रीकामिनीकान्तरूपः ॥३१॥
सर्वाभीष्टा बुधजननुता धर्मकामार्थमोक्षाः,
सत्सौख्यानां वितरणपरा दुःखविध्वंसदक्षाः ।
लब्धुं शक्या जगति न यतो जीवितव्यं विनैव,
तद्दानेन ध्रुवमसुमृतां. किं दत्तं ततोऽत्र ॥३२

आहारदानप्रशंसामाह-

पवित्रैर्नवभिः पुण्यं, दातृसप्तगुणैर्युतः ।
यः सुपात्राय सद्भक्त्या, दानमाहारसंज्ञकम् ॥३३॥

संश्वाति जगत्सारं, स दाता पुण्यभाजनम् ।
महासुखी भवेन्नित्यं, कुर्गति नैव पश्यति ॥३४॥
केवलज्ञानतो ज्ञानं, निर्वाणसुखतः सुखं ।
आहारदानतो दानं, नोत्तमं विद्यते भुवि ॥३५॥
देहावष्टम्भकं येन, अन्नदानं प्रदीयते ।
तेन सर्वाणि दानानि, दत्तानि जगतीतले ॥३६॥
भुक्तेः कायस्ततो धातु–स्थितिस्तस्यां मनःस्थिरं ।
तस्मिन् ध्यानं ततः कर्म–क्षयो मोक्षः स एव हि ॥३७॥
कायस्थित्यर्थमाहारः कायो ज्ञानार्थमिष्यते ।
ज्ञानं कर्मविनाशाय, तन्नाशे परमं पदम् ॥३८॥
गतिमतितनुतेजः कान्ति सौहित्यसत्य,
व्रतनियमयमाज्ञा तीर्थं धर्मप्रवृत्ति ।
प्रभृतिगुणसमूहा योगिनां तेन दत्ता ।
अशनवितरिता यः कामधेनूपमानः ॥३९॥
शमस्तपोदयाधर्मः, संयमो नियमो यमः ।
सर्वं तेन वितीर्यन्ते, येनाऽऽहारः प्रदीयते ॥४०॥
दीर्घायूरूपमारोग्यं, धनं धान्यं च वाहनं ।
मन्दिरं युवतीः पुत्रं, लभन्ते दानिनः स्वयं ॥४१॥

स्वर्गलोकसुखं पञ्च कल्याणपरमोऽव्ययम् ।
चतुर्धा दानतो नूनं, प्राप्नुवन्त्यव्ययं पदम् ॥४२॥
चिन्तितं पूजितं भोज्यं, क्षीयते तस्य नालये ।
आहारो भक्तितो येन, दीयते व्रतवर्तिनाम् ॥४३॥

आहारदानार्जितपुण्यपाकाद् ।
दीर्घायुरारोग्यं यशःसुखानां ।
श्रीरूपशीलादिमहागुणानां,
स्वामी भवेत् सिद्धिवधूवरश्च ॥४४॥
धनैर्धान्यैर्जनैर्युक्ता, रोगशोकविवर्जिताः ।
रूपसौभाग्यसम्पन्नाः, कीर्त्या व्याप्तत्रिविष्टपाः ॥

महाकुला महासत्त्वा, महाराज्यादिसम्पदः ।
भव्या भवन्ति ते सर्वे, सत्पात्राहारदानतः ॥४६॥
सम्पदस्तीर्थकर्तॄणां चक्रिणामर्द्धचक्रिणां ।
भवन्ति ते स्थिताःसर्वाः पयोधिमिव निम्नगाः ॥४७॥
नाशनायाः समो व्याधि भेषजं नाशनोपमम् ।
तत्प्रदातुः परो नास्ति, चिकित्साकुशलः कृतिः ॥४८॥
आहारदानपुण्येन, जायते भोगनिर्भरः ।
विदेशमपि यातस्य, सुखिता तस्य सर्वदा ॥४९॥

मुनीन्द्राहारदानेन, लभ्यन्ते भोगसम्पदः ।
वाचामगोचरा नूनं, त्रिलोकस्थाः सुदातृभिः ॥५०॥
स्वर्गादिसुखसम्प्राप्ते-रन्नदातुः किमुच्यते ।
यद्गृहं तीर्थनाथोऽपि, समायाति स्वयं यतः ॥५१॥
श्रीषेण वज्रजंघाद्याः, पात्रदानोत्थपुण्यतः ।
भोगभूस्वःसुखं भुक्त्वा तीर्थकृत्वं च लेभिरे ॥५२॥

औषधदानप्रशंसामाह-

न शक्नोति तपः कर्तुम्, सरोगः संयतो यतः ।
ततो रोगापहारार्थं, देयं प्रासुकमौषधम् ॥५३॥
शरीरं संयमाधारं, रक्षणीयं तपस्विनां ।
प्रासुकैरौषधैः पुंसा, यत्नतो मुक्तिकाङ्क्षिणा ॥५४॥
रोगैर्निपीडितो योगी, न शक्तो व्रतरक्षणे ।
नाऽस्वस्थैः शक्यते कर्तुम्, स्वस्य कर्म कदाचन ॥५५॥
न देहेन विना धर्मो, न धर्मेण विना सुखं ।
यतोऽतो देहरक्षार्थं भैषज्यं दीयते यतेः ॥५६॥
व्याधितश्चाङ्गनाशःस्या-दङ्गनाशे कुतस्तपः ।
जिनेन्द्रतपसा शून्यः, कथं प्राणी लभेत्सुखम् ॥५७॥

तस्माद् भव्यैः प्रयत्नेन, महाधर्मानुरागतः ।
सार्धमिकादिकेभ्यश्च, देयं दानं सदौषधम् ॥५८॥
रोगग्रस्तशरीराय, वक्षुर्येऽत्र वरौषधि ।
रोगनाशाय नीरोगं, वपुः कान्तं श्रयन्ति ते ॥५९॥
त्रिविधेभ्यः सुपात्रेभ्यो रोगनिर्णाशहेतवे ।
औषधं विविधं देयं, विधिपूर्वं विचक्षणैः ॥६०॥
निर्दोषं प्रासुकं शस्यं त्वनिन्द्यं भक्ष्यमुत्तमैः ।
म्लेच्छाद्यस्पृश्यतापेतं देयमौषधमुत्तमम् ॥६१॥
सम्यग्विद्याशमदमतपो, ध्यानमौनव्रताद्यं ।
श्रेयोहेतु गंतरुजि तनौ, जायते येन सर्वम् ॥६२॥
नाम्ना वृषभसेना या, श्रेष्ठिपुत्री पवित्रवाक् ।
औषधस्य प्रदानेनाऽ-भूद् ऋद्धिपरिमण्डिता ॥६३॥

अशुद्धौषधिदानफलमाहुः-

पात्रेभ्यो निन्द्यमस्पृश्य-मौषधं चेत् प्रदीयते ।
तद्दानान् नरकग्राम-भागी स्याच्च भवे भवे ॥६४॥
निधानमेव कान्तीनां, कीर्तिनां कुलमन्दिरं ।
लावण्यानां नदीनाथो, भैषज्यं येन दीयते ॥६५॥

ध्वान्तं दिवाकरस्येव, शीतं चित्रभवेरिव ।
भैषज्यदायिनो देहाद्, रोगित्वं प्रपलायते ॥६६॥
चारित्रं दर्शनं ज्ञानं, स्वाध्यायो विनयो नयः ।
सर्वेऽपि विहिता स्तेन, दत्तं येनौषधं सताम् ॥६७॥
रक्ष्यते व्रतिनां येन, शरीरं धर्मसाधनं ।
पार्यते न फलं वक्तुं, तस्य भैषज्यदायिनः ॥६८॥
वातपित्तकफोत्थानैं, रोगैरेव न पीड्यते ।
दावैरिव जलस्थायी, भेषजं येन दीयते ॥६९॥
न जायते सरोगत्वं, जन्तोरौषधदायिनः ।
पावकं सेवमानस्य, तुषारं हि पलायते ॥७०॥
आजन्म जायते यस्य, न व्याधिस्तनुतापकः ।
किं सुखं कथ्यते तस्य, सिद्धस्येव महात्मनः ॥७१॥
येनौषधप्रदस्येह, वचनैः कथ्यते फलं ।
चुलुकैर्मीयते तेन, पयो नूनं पयोनिधेः ॥७२॥
येन त्रिविधपात्रेभ्यो, दत्तौषधमुत्तमं ।
भवे भवे भवेन्नित्यं, स दाता रोगवर्जितः ॥७३॥

शास्त्रदानप्रशंसामाह—

श्रुत्वा शास्त्रं पापशत्रुं हिनस्ति,

श्रुत्वा शास्त्रं पुण्यमित्रं चिनोति ।
श्रुत्वा शास्त्रं सद्विवेकं दधाति,
तस्माद् भव्यो यत्नतस्तद्धि पाति ॥७४॥
शास्त्रं शस्त्रं पापवैरिक्षयऽदः,
शास्त्रं नेत्रं त्वन्तरार्थप्रदृष्टौ ।
शास्त्रं पात्रं सर्वचञ्चद् गुणानां,
शास्त्रं तस्माद् यत्नतो रक्षणीयम् ॥७५॥

श्रीमज्जिनेन्द्रचन्द्रोक्तं, शास्त्रं त्रैलोक्यपूजितं ।
सुश्रावकैः सुपात्राय, तद्देयं शर्मकोटिदम् ॥७६॥
शास्त्रदानं सुपात्राय, देयं सज्ज्ञानसिद्धये ।
सुश्रावकै महाभव्यैः, संसाराम्भोधितारणम् ॥७७॥
यज्ज्ञानलोचनप्रायं, वर्तते सर्वदेहिनां ।
तद् दीयते सुपात्राय, किं पुण्यमतः परम् ॥७८॥
लिखित्वा लेखयित्वा वा, साधुभ्यो दीयते श्रुतं ।
व्याख्यायतेऽथवा स्वेन, शास्त्रदानं तदुच्यते ॥७९॥
ददते ते मुनीन्द्रेभ्यो. ज्ञानदानं च पुस्तकं ।
प्राप्य नाकं श्रुतं सर्वं, स्युस्ते केवलिनोऽचिरात् ॥८०॥

शास्त्रदानफलेनात्र, कलासु सकलास्वपि ।
परिज्ञाता भवेत् पश्चात्, केवलज्ञानभाजनम् ॥८१॥
तार्किकः शाब्दिकस्तार–सैद्धान्तशतसेवितं ।
शास्त्रदानेन जायते, मुने विद्वच्छिरोमणिः ॥८२॥
ज्ञानदानेन पात्रस्य, सद्दाता परजन्मनि ।
जानाति सर्वशास्त्राणि, कीर्त्या व्याप्तजगत्त्रयम् ॥८३॥

शास्त्रसुदानफलोदयतः स्यात्
सर्वकलासु विशिष्टविवेकः ।
केवललोचनलोकितलोकः,
सिद्धिवधूवदनाम्बुजभृङ्गः ॥८४॥

जायते ज्ञानदानेन, विशालसुखभाजनं ।
कलार्णवामृतं चासौ गण्डूषं कुरुते नरः ॥८५॥
केवलज्ञानसाम्राज्य–कारणं कर्मनाशकम् ।
ज्ञानदानं प्रदातव्यं–शास्त्रपात्राय पावनम् ॥८६॥
भुक्त्वा राज्यस्य सौख्यं, भवतनुसुखात् निःस्पृहीकृत्य चित्तं ।
लात्वा दीक्षां च बुध्वा, श्रुतमपि सकलं ज्ञानमान्त्यं लभेत् ॥
त्यागो गुणो गुणशताधिको मतो मे,
विद्या विभूषयति किं यदि तं ब्रवीमि ।

एतद्द्वयं यदि सनाथयते विवेकः,

एतत् त्रयं न हि मदोऽस्ति नमोऽस्तु तस्मै ॥८७॥

यस्तु सञ्चिनुते वित्तं, दानपूजादिहेतवे ।
धमिष्यामीति सोऽपथ्यं, सेवते दैववञ्चितः ॥८८॥

त्यागाय श्रेयसे वित्त–मवित्तः संचिनोति यः ।
स्वशरीरं स पङ्केन, स्नास्यामीति विलम्पति ॥८९॥
धर्मार्थं यस्य वित्तेहा, परं तस्य निरीहता ।
प्रक्षालनाद्धि पङ्कस्य, दूरादस्पर्शनं वरम् ॥९०॥

शान्तिमिच्छति तृष्णाया यो धनेन विचेतनः ।
शान्त्यै दीप्तस्य सप्तार्चेः सुरिः क्षिपतीन्धनम् ॥९१॥
शतमिच्छति निस्वः प्राक्, तत्प्राप्तौ स्यात् सहस्रधीः ।
तल्लाभे लक्षधीरित्थं, तृष्णा ऽग्रेऽग्रे विसर्पति ॥९२॥
परिग्रहग्रहार्तानां, दुर्विकल्पशताकुलम् ।
स्वास्थ्यं नैति मनो वात–कम्पिताश्वत्थपत्रवत् ॥९३॥

ॐ ह्रीं उत्तमत्यागधर्माङ्गाय नमः

त्यक्तसङ्ग सुखाऽत्यन्तं, त्यागं सर्वसुखाकरं ।

पूजया परया भक्त्या, पूजयामि तदाप्तये ॥

ॐ ह्रीं परमब्रह्मणे उत्तमत्यागधर्माङ्गाय नमः

अनर्घ्यपदप्राप्तये अर्घ्यं निर्वपामीति स्वाहा

# उत्तमाकिञ्चन्यधर्मः

## मङ्गलाचरणम्

चतुर्निकायामरवन्दिताय, घातिक्षयावाप्तचतुष्टयाय ।
कुतीर्थतर्काऽजितशासनाय, देवाधिदेवाय नमो जिनाय ॥
धर्मः श्रीवशमन्त्र एष परमो, धर्मश्च कल्पद्रुमो,
धर्मः कामगवीप्सितप्रदमणिः, धर्मः परं दैवतम् ।
धर्मः सौख्यपरम्परामृतनदी-सम्भूतसत्पर्वतो,
धर्मो भ्रातः ! उपास्यतां किमपरैः, क्षुद्रैरसत्कल्पनैः ॥

आकिञ्चन्यलक्षणमाह-

शरीरादिकमात्मीय-मनपेक्ष्य प्रवर्तनं ।
निर्ममत्वं मुनेः सम्य-गाकिञ्चन्यमुदाहृतम् ॥३॥

उपात्तेष्वपि शरीरादिषु संस्कारादित्यागात्, ममेदमित्यभिसन्धि-निवृत्तिः आकिञ्चन्यमिष्यते । यत्र जीवाऽबद्धास्तथा जीवनिबद्धा बाह्याभ्यन्तरभेदभिन्नाः परिग्रहा मनोवाक्कायैः कृतकारिताऽनुमतैः त्यज्यन्ते बुधैस्तदाऽऽकिञ्चन्यधर्मो भवति ।

आकिञ्चन्यमनुष्ठेयं, योगैर्व्युत्सर्गपूर्वकं ।
धर्मबीजं सुधर्माय, चिन्तातीतं सुखाकरम् ॥४॥

परिग्रहसंज्ञाकारणमाह-

उवयरणवं ग्गोग य, तस्सुवग्रोगेण मुच्छिदाए य।
लोहस्सुदीरणाए, परिग्गहे जायदे सण्णा ॥४॥

ग्राकिञ्चन्यधर्मं शिवार्थिन प्रोत्साहयितु लोकोत्तरं तन्माहात्म्य मादावाऽऽदिशति–

मूर्च्छामोहवशात् ममेदमहम–स्येत्येवमावेशनम्,
तां दुष्टग्रहवन्न मे किमपि नो, कस्याप्यहं खल्विति।
आकिञ्चन्यसुप्रसिद्धमन्त्रसतता–भ्यासेन धुन्वन्ति ये,
शश्वत् ते प्रतपन्ति विश्वपतयश्चित्रं हि वृत्तं सतां ॥५॥

नैष्किञ्चन्यप्रधानं यत्, परं निर्वाणकारणं।
हिंसारक्षणयाञ्चादि–दोषैरस्पृष्टमूर्जितम् ॥६॥

ग्रथाकिञ्चन्यलक्षणधर्मानुष्ठायिनः परमाद्भुनफलप्रतिलम्भमभिधत्ते

ग्रकिञ्चनोऽहमित्यस्मिन्, पथ्यक्षुण्णचरे च न्।
तददृष्टचरं ज्योतिः, पश्यत्यानन्दनिर्भरम् ॥७॥

ग्रकिञ्चनोऽहमित्यास्व–त्रैलोक्याधिपतिर्भव।
योगिगम्यं तव प्रोक्तं, रहस्यं परमात्मनः ॥८॥

परिग्रहत्यागादाकिञ्चन्यगुण ग्राविर्भवति। इदमाकिञ्चन्य त्रिभुवनपतिपूज्य, लोभतृष्णादिपर्वतभेदनवज्रतुल्यं। दुरिततिमिरविनाशाय सूर्यसम, श्रीजिनेशगणधरादिभिःसेव्यं, शिवमार्गम्, शर्मखनिरस्ति।

स्वा शक्तिमगूहमानः सन् योगत्रयेण परिग्रहं पुरुषः परित्यजन् शुद्धयति। कर्ममलापाय करोतीत्यर्थः ।

"तङ्ग एव मतः सूत्रे, निःशेषाऽनर्थमन्दिरम्"

लोभकषायोदयाद् विषयेषु सङ्गः परिग्रहः

नानारम्भपरायणै र्नरवरै-रावर्ज्य यस्त्यज्यते,
दुष्प्राप्योऽपि परिग्रहस्तृणमिव, प्राणप्रयाणे पुनः ।
आदावेव विमुञ्च दुःखजनकं, तं त्वं त्रिधा दूरतः,
चेतो मस्करिमोदकव्यतिकरं, हास्यास्पदं मा कृथा ॥

साम्राज्यं कथमप्यवाप्य सुचिरात्, संसारसारं पुनः,
तत्यक्त्वैव यदि क्षितीश्वरवराः, प्राप्ता श्रियं शाश्वतीं ।
त्वं प्रागेव परिग्रहान् परिहर, त्याज्यान् गृहीत्वाऽपि ते,
माऽभूर्भौतिकमोदकव्यतिकरं, संपाद्य हास्यास्पदम् ॥

व्रजति भृशमधस्ताद् गृह्यमाणेऽर्थजाते,
गतमरमुपरिष्टात् तत्र संत्यज्यमाने ।
हृतकहृदय! तद्वद् येन यद्वत् तुलाग्रं,
जहीहि दुरितहेतुं येन सङ्गं त्रिधापि ॥११॥

बहुनोक्तेन किं वा बालाग्रकोटिमात्रः श्रामण्याऽयोग्यः परिग्रहो जातुचित् नादेयः। परिग्रहग्रहणेन तद्रक्षणचिन्ता जायते, तन्नाशे शोककोपाद्याः प्रादुर्भवन्ति, तैः शोकादिभिः घोराणि पापानि

जायन्ते, पापेभ्यः दुर्गतयो भवन्ति. तासु तीव्राणि दुःखानि संपद्यन्ते इति मत्वा विवेकिभि सङ्गः सर्वथा सर्वदा च हेयः ।

निवृत्तिं भावयेद् यावन् निवर्त्यं तदभावतः ।
न वृत्ति र्न निवृत्तिश्च, तदेव पदमव्ययम् ॥१३॥

रागद्वेषौ प्रवृत्तिः स्यात्, निवृत्तिस्तन्निषेधनम् ।
तौ च बाह्यार्थसम्बद्धौ, तस्मात् तान् सुपरित्यजेत् ॥

आसंसारमविद्यया चलसुखाभासानुबद्धाशया,
नित्यानन्दसुधामयस्वसमयस्पर्शच्छिदभ्याशया ।
इष्टानिष्टविकल्पजालजटिलेष्वर्थेषु विस्फारितः,
कामन् रत्यरती मुहुर्मुहुरहो, बाबध्यते कर्मभिः ॥१५॥

रतेररतिमायातः, पुनारतिमुपागतः ।
तृतीयं पदमप्राप्य, बालिशो बत सीदति ॥१६॥

निंदणगरहणजुत्तो–सकलपरिग्रहत्यागो हि मुक्तिमार्गः मया तु पापिना परीषहभीरुणा वस्त्रपात्रादिकपरिग्रहो गृहीत इत्यन्तः सन्तापो निन्दा । एवमेव गुरुजनानामग्रे कथनं गर्हा ।

यतो जनो भ्राम्यति भवकानने,
यतो न सौख्यं लभते कदाचन ।
यतो व्रतं नश्यति मुक्तिकारणं,
परिग्रहोऽहोऽसौ द्विविधो विमुच्यते ॥१७॥

**बाह्यग्रन्थविहीना दरिद्रमनुजा स्वपापतः सन्ति ।**
**पुनरभ्यन्तरसङ्ग–त्यागी, लोकेऽतिदुर्लभो जीवः ॥१८॥**

कातराङ्गिनां दुस्त्याज्याः कृत्स्नदोषविधायिनः अभ्यन्तरा ग्रन्था महायत्नेन त्याज्याः । अखिलाः प्राणिनः अन्तःसङ्गमूर्च्छया एव पापदुर्ध्यानदुःखखनिषु बाह्यसङ्गपङ्केषु मज्जन्ति । अन्तरङ्गपरिग्रहयुक्तस्य वस्त्रपरित्यागप्रव्रज्याग्रहणव्रतधारणतपोविधानं सर्वम् व्यर्थं भवति, यथा कृष्णाहि निर्मोकं मुञ्चति न तु विषं तथा कश्चित् कुधीः वस्त्रादीनि मुञ्चति न त्वन्तःपरिग्रहान् मुञ्चति अतो ये मिथ्यात्ववेदहास्यादिकषायांस्त्यक्तुं न क्षमा तेषां वस्त्रादित्यागोऽहिवद् भवेत् । इति मत्वा यतिनोऽन्तःसङ्गान् सदा घ्नन्तु अन्तर्बाह्यग्रन्थत्यागाच्च चित्तशुद्धिर्जायते, तथा कर्मारण्यदवानलं ध्यानं च जायते, ध्यानात् कर्मणां नाशस्ततो दुःखातिगो मोक्षस्तत्र वाचामगोचरं नित्यं सौख्यं लभते जीवः । यः क्लीबो द्रव्यादिबाह्योपधीस्त्यक्तुमक्षमः स अन्तःस्थान् कषायादिरिपून् कथं त्यजति । ये शरीरादिषु विरक्ता मुमुक्षवस्ते स्वल्पमपि सङ्गं खसुखादिकं वा नेहन्ते त एवात्र धन्याः पूज्याः सन्ति इति मत्वा वैषयिकैः सुखैः सार्द्धं कषायाक्षविद्विषो हत्वा मुक्तिकाङ्क्षिणो मुनयो द्विधा सङ्गं त्यजन्तु ।

अथाभ्यन्तरचतुर्दशपरिग्रहान् व्याचष्टे

**मिथ्यात्ववेदहास्यादि–षट्कषायचतुष्टयं ।**
**रागद्वेषौ सङ्गाः स्युः अन्तरङ्गाश्चतुर्दश ॥१६॥**

स मिथ्यात्वं त्रयो वेदा, हास्यप्रमृतयोऽपि षट् ।
चत्वारश्च कषायाः स्युरन्तर्ग्रन्थाश्चतुर्दश ॥१९॥

इमे अन्तरङ्गजीवनिबद्धा विश्वदुःखाकराः कथञ्चिज्जीवमया मुमुक्षुभिः सदा त्याज्याः ।

अभ्यन्तरचतुर्दशपरिग्रहस्य संक्षेपेण स्वरूपमाह

अव्यक्तोऽनर्थमयं, ह्यमनवसरे, ऽप्येतदस्याममपीच्छ–
त्यास्तेऽरम्येऽपि रम्ये,ऽप्यहह न रमते, द्वेष्टि केऽव्येते शोकं ।
यस्मात्तस्माद् बिभेति, क्षिपति गुणवतोऽप्यहति कोधदम्भान्
अस्थानेऽपि प्रयुङ्क्ते ग्रसितुमपि जगद्, वष्टि सङ्गग्रहार्तः ॥

निष्परिग्रहस्य गुणानाह–

साक्षादुच्छ्वसतीव संयमतर्रानिर्मीकताऽऽरोहती–
वोल्लासं भजतीव सत्तपश्वी, शुद्धिं दधातीव च ।
धर्मः शर्मकरः समस्तविषय, व्यापृच्छता मूर्च्छती–
वाऽसङ्गं लसतीव लाघवगुणः स्वास्थ्यता क्रीडति ॥२१॥

पुण्याब्धे मंथनात् कथंकथमपि, प्राप्य श्रियंनिर्विशन्,
वैं कुण्ठो यदि दानशासनविधौ, शण्ठोऽस्मि तत्तद्विधौ ।
इत्यर्थं ह्यपगृह्णता शिवपथे, पान्थान् मथ्नाश्व स्फुरत्,
ताद्दग्वीर्यबलेन येन स द्रुतं, गम्येत गम्येत सः ॥२२॥

"त्यागः परिग्रहाणा–मलवममरामरं कुरुते"

सर्वसङ्गपरित्यागः, कीर्त्यते श्रीजिनागमे ।
यस्तमेवाऽन्यथा ब्रूते, स हीनः स्वात्मघातकः ॥२३॥
सर्वसङ्गविनिर्मुक्तः, संवृतात्मा स्थिराशयः ।
धत्ते ध्यानधुरां धीरः, संयमी वीरवर्णिताम् ॥२४॥
विजने जनसङ्कीर्णे ,सुस्थिते दुःस्थितेऽपिवा ।
सर्वत्राप्रतिबद्धः स्यात्, संयमी सङ्गवर्जितः ॥२५॥
सङ्गपङ्कात् समुत्तीर्णो, नैराश्यमवलम्बते ।
ततो नाक्रम्यते दुःखैः, पारतन्त्र्यैः क्वचिन्मुनिः ॥२६॥
"त्याज्य एवाऽखिलः सङ्गो, मुनिभिर्मोक्तुमिच्छुभिः"
नाणवोऽपि गुणा लोके, दोषाः शैलेन्द्रसन्निभाः ।
भवन्त्यत्र न सन्देहः, सङ्गमासाद्य देहिनाम् ॥२७॥
यास्यन्ति निर्दया नूनं, यद् दत्वा दाहमूर्जितं ।
हृदि पुंसां कथं ते स्युस्तव प्रीत्यै परिग्रहाः ॥२८॥
उन्मूलयति निर्वेदं, विवेकद्रुममञ्जरीं ।
प्रत्यासत्तिं समायातः, सतामपि परिग्रहः ।
चित्तमूर्च्छाकरं माया-क्रोधादिगूढपादपं ।
तृष्णाग्निकाष्ठमाकुलं, दुर्ग्रहं च परिग्रहम् ॥२९॥
नो सङ्गाज्जायते सौख्यं, मोक्षसाधनमुत्तमं ।

सङ्गाच्च जायते दुःखं, संसारस्य निबन्धनम् ॥३०॥
दानायोपार्ज्यते वित्तं, भोगाय च गृहाश्रमैः ।
यस्य तस्मिंश्च न स्तः, तस्यार्थोपार्जनं वृथा ॥३१॥
यस्य दानविहीनस्य, धनान्यायान्ति यान्ति किं ।
अरण्यकुसुमानीव, निरर्थास्तस्य सम्पदः ॥३२॥
नृणां वरं न दारिद्र्यं, दानहीनं महद् धनं ।
मोहशोकादिबीजं च, पापं दुर्गतिकारणम् ॥३३॥
चत्वारो वित्तदायादाः, धर्मचौराग्निभूभुजः ।
ज्येष्ठेऽपमानिते पुंसि, त्रयः कुप्यन्ति सादराः ॥३४॥
योऽर्थः समर्ज्यते दुःखाद्, रक्ष्यते चातिदुःखतः ।
तत्फलं गृह्यते सद्भिः, दानाद् भोगाच्च नित्यशः
धर्मत्रिवर्गपुरुषार्थहेतोः प्रधानमर्थो ननु साधनीयः ।
अनेन कृत्वा भुवि धर्मकामौ, सुखेन यातः स्वयमेव सिद्धिम् ।

णिंदणगरहणजुत्तो–सकलपरिग्रहत्यागो हि मुक्तिमार्गः मया तु पातकिना परीषहभीरुणा वस्त्रपात्रादिकपरिग्रहो गृहीत इत्यन्तः सन्तापो निन्दा । एवमेव गुरुजनानामग्रे कथनं गर्हा ।

अचेतनसङ्गाच्चेतनसङ्गस्य बाधकतरत्वमाचष्टे

यौनमौखादिसम्बन्ध–द्वारेणाऽविश्य मानसम् ।
यथा परिग्रहश्चिद्वान्, मथ्नाति न तथेतरः ॥३७॥

चेतनपरिग्रहनिन्दामाह–

स्त्रीपुत्रमातृपितृभ्रातृस्वसृदासीदासभृत्यशिष्यादयो द्विपदचेतनपरिग्रहाः । गोमहिषीलम्बकर्णादयश्चतुष्पदपरिग्रहाः सन्ति ।

गाढरागनिमित्तभूतान् कलत्रस्य दोषान् व्याचष्टे

वपुस्तादात्म्येः ।मुखरतिसुखोत्कः स्त्रियमरं,
परामप्यारोप्य श्रुतिवचनयुक्त्याऽऽत्मनि जडः ।
तदुच्छ्वासोच्छ्वासी तदसुखसुखासौख्यसुखभाक् ।
कृतघ्नो मात्रादीनपि परिभवत्याः परधिया ॥३७॥

भार्यायाः सम्भोगविप्रलम्भश्रृङ्गाराभ्या पुरुषार्थभ्रंशकत्वमुपलम्भयति ।

प्रक्षोभ्याऽऽलोकमात्रा–दपि रजति नरं, याऽनुरज्यानुवृत्या,
प्राणैः स्वार्थापकर्षं, कृशयति बहुश,तन्वती विप्रलम्भम् ।
क्षेपाऽवज्ञाशुगिच्छा,विहृतिविलपना–द्युग्रमन्तुं र्बुनोति ।
प्राज्या गत्वा मिषादाऽऽमिषमपि कुरुते, साऽपि भार्याऽहहार्या ॥

कलत्रातिरागेण पुंस्पीडकत्वं दृष्टान्तेन स्पष्टयति

स्वाऽऽसङ्गेन सुलोचना जयमघाम्भोधौ तथाऽवर्तयत्,
स्वं श्रीमत्यनुवज्रजङ्घमऽनयद् भोगालसं दुर्मृतिं ।
नानासद्ग्रहविप्रयोगसमरा–नाचारशङ्कादिभिः,
सीता रामममतापयत् क्व न पतिं, हा साऽऽपदि द्रौपदी ॥

स्त्रीप्रसक्तस्य कृतघ्नत्वं प्रकाश्य सांप्रतं मरणेनापि तामनुगच्छ-तस्तस्य दुरन्तदुर्गतिदुःखोपभोगं व्यनक्ति ।

चिरायसाधारणजन्मदुःखं, पश्यन् परं दुःसहमात्मनोऽग्रे ।
पृथग्जनः कर्तुमिवेह योग्यां, मृत्यानुगच्छत्यपि जीवितेशाम ।

पितृमातृज्ञातीनामपकारत्वं वक्रभणित्या निन्दन् दुष्कृतनिर्जर-णहेतुत्वेनोपकारत्वादरातीनभिनन्दति-

बीजं दुःखैकबीजे व्यपुषि भवति यस्या तर्पकास्तानतन्त्रः,
तस्यैवाढ्यानरक्षाद्युपविधु यतते तज्जतौ या च माता ।
भद्रं ताभ्यांपितृभ्यां, भवतु ममतया मद्भवद्य घूर्णयद्भ्यः ।
स्वान्तं स्वेभ्यस्तु बद्धोऽञ्जलिरयमरयः पापदारा वरं मे ॥

मुमुक्षोरात्मतत्त्वभावकोपदेशोऽयम्

शरणमशरणं वो बन्धवो बन्धमूलं,
चिरपरिचितदारा द्वारमापद्गृहाणां ।
विपरिमृशत पुत्राः शत्रवः सर्वमेतत् ॥४२॥
त्यजत भजत धर्मं निर्मलं शर्मकामाः,

वपुर्गृहं धनं दाराः, पुत्राः मित्राणि शत्रवः,
सर्वथाऽन्यस्वभावानि, मूढ ! स्वानि प्रपद्यते ॥४३॥

संप्रति पुत्रमोहान्धान् दूषयन्नाह

यः पत्नीं गर्भभावात् प्रभृति विगुरयन् व्यवकरोति विघ्नं ,

ऐहिकार्थं सहकारिणां मोहाऽऽवहत्वात्त्याज्यत्वमुपदर्शयन्
आमुष्मिकार्थंसुहृदामवस्तनभूमिकायामेवानुसर्तव्यतामभिधत्ते

निश्छद्म मेद्यति विपद्यपि सम्पदीव,
यः सोऽपि मित्रमिह मोहयतीति हेयः ।
श्रेयः परत्र तु विबोधयतीति तावत्,
शक्यो न यावदसितुं सकलोऽपि सङ्गः ॥४९॥

सङ्गः सर्वात्मना त्याज्यो, मुनिभि र्मोक्तुमिच्छुभिः ।
स चेत् त्यक्तुं न शक्येत, कार्यस्त ह्यात्मदर्शिभिः ॥५०॥
सङ्गः सर्वात्मना त्याज्यः, स चेत् त्यक्तुं न शक्यते ।
स सद्भिः सह कर्तव्यः, सन्तः सङ्गस्य भेषजम् ॥५१॥

शिष्यशासनेऽपि क्वचित् क्वचित् क्रोधोद्भवं भावयति ।

यः शिष्यते हितं शश्व- दन्तेवासी सुपुत्रवत् ।
सोऽप्यन्तेवासिनं कोपं, छोपयत्यन्तरान्तरा ॥५२॥

अत्यन्तभक्तिमतोऽपि भृत्यस्याकृत्यप्रधानत्वादनुपादेयतां लक्षयति

योऽतिभक्ततयात्मेति, कार्यिभिः कल्प्यतेऽङ्गवत् ।
सोऽप्यकृत्येऽग्रणी भृत्यः, स्याद् रामस्याञ्जनेयवत् ॥५३॥

दासीदासस्य स्वीकारो मनस्तापाय स्यादित्याह

अतिसंस्तवधृष्टत्वा-दनिष्टे जाघटीति यत् ।
तद् दासीदासमृक्षीव, कर्णात्ताः कस्य शान्तये ॥५४॥

चतुष्पदपरिग्रहं प्रतिक्षिपति

द्विपदैरप्यसत्सङ्ग,श्चेत् किं तर्हि चतुष्पदैः ।
तिक्तमप्यामसन्नाग्ने–र्नायुष्यं किं पुनर्घृतम् ॥५५॥

परिग्रहलक्षणमाह

ममेदमितिसंकल्पो, बाह्याभ्यन्तरवस्तुषु ।
परिग्रहो मतस्तत्र, कुर्याच् चेतोनिकुञ्चनम् ॥५६॥
चेतनाऽचेतनभेदाद्, द्विधा बाह्यपरिग्रहः ।
ग्रन्तः स एक एव स्याद्, भवहेत्वाशयाश्रयः ॥५७॥

''मणिमुक्तारजतसुवर्णवस्त्रपात्रगेहादयोऽचेतन परिग्रहा एते बाह्यपरिग्रहाः पापदुःखार्णवाः सन्ति,,

परिग्रहनिन्दामाह–

ग्रारम्भो जन्तुघातश्च, कषायाश्च परिग्रहात् ।
जायन्तेऽत्र ततः पातः, प्राणिनां श्वभ्रसागरे ॥५८॥
सङ्गात् कामस्ततः क्रोधः, तस्माद् हिंसा तयाऽशुभं ।
तेन श्वाभ्री गतिस्तस्यां, दुःखं वाचामगोचरम् ॥५९॥
ग्रनित्येऽत्रैव संसारे, यावन्मात्रः परिग्रहः ।
तावन्मात्रस्तु सन्तापस्तस्मात्त्याज्यः परिग्रहः ॥६०॥
ग्रप्रत्ययतमोरात्रिः, लोभाग्निसमिधाहुतिः ।
सावद्यग्राहवाराशि स्तथाभीष्टः परिग्रहः ॥६१॥

अणुमात्रादपि ग्रन्थात्, मोहग्रन्थिर्दृढीभवेत् ।
विसर्पति ततस्तृष्णा, यस्यां विश्वं न शान्तये ॥६५॥
यः सङ्गपङ्कनिर्मग्नो, ऽप्यपवर्गाय चेष्टते ।
स मूढः पुष्पनाराचैः, विभिन्द्यात् त्रिदशाचलम् ॥६६॥
निःसङ्गोऽपि मुनिर्न स्यात्, समूर्च्छः सङ्गवर्जितः ।
यतो मूर्च्छैव तत्त्वज्ञैः, सङ्गसूतिः प्रकीर्तितः ॥६७॥

बहिःसङ्गेषु देहस्य हेयतमत्वप्रतिपादनार्थमाह-

शरीरं धर्मसंयुक्तं, रक्षितव्यं प्रयत्नतः ।
इत्याप्तवाचस्त्वग्देहः, त्याज्य एवेति तण्डुलः ॥६८॥

कायक्लेशलालनयो र्गुणदोषौ भिक्षोरुपदिशन्नाह-

योगाय कायमनुपालयतोऽपि युक्त्या,
क्लेश्यो ममत्वहतये, तव सोऽपि शक्त्या ।
भिक्षोऽन्यथाऽक्षसुखजीवितरन्ध्रलाभात्,
तृष्णासरिद् विधुरयिष्यति सत्तपोऽद्रिम् ॥६९॥

कुप्यादिपरिग्रहस्यैहत्याशानुबन्धनिबन्धनत्वमभिधत्ते-

यः कुप्यधान्यशयनासनयानभाण्ड,
[illegible]
[illegible] भवति [illegible] ।

तं मन्मन्तोर्मिजटिलोक्षति भोत्तराश। ॥७१॥

अचेतनधनपरिग्रहनिन्दामाह–

जातिर्यातु रसातलं गुणगणः, स्तत्राप्यधो गच्छतु,
शीलं शैलतटात् पतत्वभिजनः, सन्दह्यतां वह्निना ।
शौर्ये वैरिणि वज्रमाशु निपतत्–त्वर्थोऽस्तु नः केवलं,
येन केन विना गुणास्तृणलवाः, प्रायः समस्ता इमे ॥
न हि तद्विद्यते, किञ्चिद्, यदर्थेन न सिद्धयति ।
यत्नेन मतिमांस्तस्मा–दर्थमेकं प्रसाधयेत् ॥७२॥

यस्यास्ति वित्तं स नरः कुलीनः,
स पण्डितः स श्रुतवान् गुणज्ञः ।
स एव दाता स च दर्शनीयः,
सर्वे गुणाः काञ्चनमाश्रयन्ति ॥७३॥

माता निन्दति नाभिनन्दति पिता, भ्राता न संभाषते,
भृत्यः कुप्यति नानुगच्छति सुतः, कान्ता च नालिङ्गयते ।
अर्थप्रार्थनशङ्कया न कुरुते, ऽप्यालापमात्रं सुहृत्,
तस्माद् द्रव्यमुपार्जयस्व सुमते ! द्रव्येण सर्वे वशाः ॥

चेतनेतरबाह्यपरिग्रहद्वयस्य दुस्त्यजत्वमभिधत्ते–

प्राग्देहस्वग्रहात्मी–कृतनिखिलपरी–पाकसंपादितैतद्;

देहद्वारेण दार—प्रभृतिभिरिमकं, श्वासुकैश्चालयाद्यैः ।
लोकः केनापि बाह्यं—रपि दृढमबहि,स्तेन बन्धेन बद्धो,
दुःखार्तंश्छेत्तुमिच्छन् निबिडयति तरां यं विषादाम्बुवर्षैः ।।
गृहादिमूर्च्छायाततत्प्रक्षाद्युपचितस्य पातकस्यातिदुर्जरत्व ब्रूने
लवृगेहाद्युपधौ ममेवमिति सं—कल्पेन रक्षार्जना,
संस्कारादिवुरीहितव्यतिकरे, हिंसादिषु व्यासजन् ।
दुःखोद्गारभरेषु रागविधुर—प्रज्ञः किमप्याहर-
त्यंहो यत्खरेऽपि जन्मवहने, कष्टं चिराज्जीर्यति ।।७५।।

दशविधपरिग्रहवर्णनम्

जिनेन्द्रै र्दशधा प्रोक्ता, गृहस्थानां परिग्रहाः ।
तेषां संख्या नरैः कार्या, पापारम्भादिहानये ।।७६।।

क्षेत्रं गृहं धनं धान्यं, द्विपदं च चतुष्पदं ।
आसनं शयनं वस्त्रं, भाण्डं स्याद् गृहमेधिनां ।।७७।।

प्रथ हिंसाकरं क्षेत्रं, त्यज त्वं धर्महेतवे ।
यदि त्यक्तुं समर्थो न, संख्यां कुरु हलादिके ।।७८।।

ममत्वजनकेऽसारे, स्थावरत्रसघातके ।
सन्तोषधनसिद्धयर्थं, भज संख्यां गृहादिके ।।७९।।

द्रव्यरूप्यसुवर्णादौ, स्तोकां संख्यां विधेहि भो ! ।

लोभं पापकरं त्यक्त्वा, पीत्वा सन्तोषजामृतम् ॥७९॥
शाल्यादिसर्वधान्यानां, प्रमाणं भज सर्वथा ।
कीटाद्युत्पत्तिहेतूनां, हृद्व्रतविशुद्धये ॥८०॥
भृत्यानां दासदासीनां, भार्याणां च शुभाय वै ।
परिमाणं प्रकर्तव्यं, श्रावकैः गुरुसन्निधौ ॥८१॥
अश्ववृषभगोरूपं-चतुष्पदकदम्बके ।
त्रसादिहिंसके स्तोकां, कुरु संख्यां प्रमापदे ॥८२॥
याने सिंहासने चैव, शकटादौ तथा भज ।
प्रमाणं मित्र ! धर्माय, खट्वादिशयने वरे ॥८३॥
क्षौमादिके सुवस्त्रे च, भज संख्यां दयात भो ! ।
मञ्जिष्ठादौ च सद्भाण्डे, महार्घ्ये भाजने तथा ॥८४॥
बाह्यासङ्गरते पुंसि, कुतश्चित्तविशुद्धता ।
सतुषे हि बहिर्धान्ये, दुर्लभाऽन्तर्विशुद्धता ॥८५॥
परिग्रहग्रहग्रस्तः, सर्वं गिलितुमिच्छति ।
धने न तस्य सन्तोषः, सरित्पूरैरिवार्णवः ॥८६॥
कादाचित्को बन्धः, क्रोधादे, कर्मणः सदा सङ्गात् ।
नातः क्वापि कदाचित्, परिग्रहवतां जायते सिद्धिः ॥
सर्वः कस्याऽनर्थो, न भवति भरतः समस्तधनलाभरतः ।

चक्री चक्रेऽनुजवधाय, यः प्रहृतवैरिचक्रे चक्रे ॥८।।७

अविश्वासतमोनक्तं लोभानलघृताहुतिः।
आरम्भमकराम्भोधि–रहो श्रेयः परिग्रहः ॥८८॥

अन्तरङ्गसङ्गनिग्रहोपायमाह–

उद्यत्क्रोधादि हास्यादि षट्कवेद त्रयात्मकं।
अन्तरङ्गं जयेत् सङ्गं, प्रत्यनीकप्रयोगतः ॥८९॥

वहिरङ्गसङ्गत्यागविधिमाह–

अयोग्यासंयमस्याङ्गं, सङ्गं बाह्यमपि त्यजेत्।
मूर्च्छाङ्गत्वादपि त्यक्तु–मशक्यं कृशयेच्छनैः ॥९०॥

पितृमातृकलत्रपुत्रेभ्यो मोहत्यागविधिमाह

यो हि नाम श्रमणो भवितुमिच्छति स पूर्वमेव बन्धुवर्गमापृच्छते। गुरुकलत्रपुत्रेभ्य आत्मानं विमोचयति। ज्ञानदर्शनचारित्रतपोवीर्याचारमासीदति। तथाहि–एव बन्धुवर्गमापृच्छते। अहो इदंजन–शरीरबन्धुवर्गवर्तिन आत्मानोऽस्य जनस्य आत्मा न किञ्चनाऽपि युष्माकं भवतीति निश्चयेन यूयं जानीथ तत आपृष्टा यूयं अयमात्मा अद्योद्भिन्नज्ञानज्योतिःआत्मानमेवात्मनोऽनादिबन्धुमुपसर्पति।

अहो इदंजनशरीरजनकस्यात्मन्! अहो इदंजनजनन्या आत्मन्! अस्य जनस्यात्मा! युवाभ्यान जनितो भवतीति निश्चयेन युवां जानीतं तत इममात्मानं युवां विमुञ्चतं, अयमात्मा अद्योद्भिन्न

ज्ञानज्योतिः आत्मानमेवात्मनोऽनादिजनकमुपसर्पति । अहो इदजन शरीररमण्या आत्मन् ! अस्य जनस्य आत्मानं न त्वं रमयसीति निश्चयेन त्वं जानीहि तत इममात्मानं विमुञ्च, अयमात्मा अद्योद्भिन्नज्ञानज्योतिः स्वानुभूतिमेवात्मनोऽनादिरमणीमुपसर्पति- अहोइदजनशरीरपुत्रस्यात्मान ! अस्य जनस्यात्मनो न त्व जन्यो भवतीति निश्चयेन त्व जानीहि तत इममात्मान विमुञ्च अयमात्मा अद्योद्भिन्नज्ञानज्योतिः आत्मानमेवात्मनोऽनादिजन्य- मुपसर्पति । एवं गुरुकलत्रपुत्रेभ्य आत्मान विमोचयति ।

गृहत्यागविधिमाह

पञ्चाचारक्रियोद्युक्तो, निष्क्रमिष्यन्नसौ गृहात् ।
आपृच्छेत् गुरून् बन्धून्, पुत्रादींश्च यथोचितम् ॥

अहो ! कालविनयोपधानबहुमानाऽनिह्नवार्थव्यञ्जनतदुभयसम्पन्न स्वलक्षणज्ञानाचार ! निश्चयेन त्व मम शुद्धात्मने नासीत जानाम्यहं, तथापि त्वां तावदाश्रयामि, यावत्त्वत्प्रसादाच्छु- द्धात्मानं नोपलभे ॥१॥

अहो ! निःशङ्कितत्वनिःकाङ्क्षितत्वनिर्विचिकित्सितत्व निर्मूढदृष्टित्वोपबृंहणस्थितिकरणवात्सल्यप्रभावनालक्षणदर्शनाचार! निश्च- येन त्वं मम शुद्धात्मनो नासीत्यहं जानामि, तथापि त्वामहं तावदाश्रयामि यावत् त्वत्प्रसादाच्छुद्धात्मानं नोपलभे ॥२॥

अहो ! मोक्षमार्गप्रवृत्तिकारणपञ्चमहाव्रतोपेतकायवाङ्मनोगुप्ती- र्याभाषैषणाऽऽदाननिक्षेपणप्रतिष्ठापनसमितिलक्षणचारित्राचार !

त्यहं तत्त्वतोजानामि, तथाऽपि त्वामहं तावदाश्रयामि यावत् त्वत्प्रसादादहं स्वशुद्धात्मानं नोपलभे ॥३॥

अहो ! अनशनावमोदर्यवृत्तिपरिसंख्यारसपरित्यागविविक्तशय्यासनकायक्लेश ! अहो ! प्रायश्चित्तविनयवैयावृत्यस्वाध्यायव्युत्सर्गध्यानतपआचार ! त्वं मम शुद्धात्मनो निश्चयेन नास्तीत्यहं वस्तुतो जानामि तथापि त्वामहं तावदाश्रयामि या त्वत्प्रसादादहं स्वशुद्धात्मानं नोपलभे ॥४॥

अहो ! चतुराचारप्रवर्तनेस्वशक्त्यनुपगूहनलक्षणवीर्याचार ! त्वं निश्चयेन मम शुद्धात्मनो नासीतीदं सुष्ठु जानामि तथापि त्वामहं तावदाश्रयामि यावत्त्वत्प्रसादादहं स्वशुद्धात्मानं नोपलभे ॥५॥

तथाहि—अहो मदीयशरीरजनकस्यात्मन् ! अहो मदीयशरीर जनन्यात्मन् ! युवाभ्यां नायं मदात्मा जनितो भवतीति निश्चयेन युवां जानीतं। तत आपृष्टौ युवामिममात्मानं विमुञ्चतं । अद्यायमात्मा उद्भिन्नज्ञानज्योतिः, अनादिजनकमात्मानमेव उपसर्पति । तथा अहो मदीयशरीरबन्धुजनवर्तिन आत्मानः अयं मदात्मा युष्माकं किञ्चनापि न भवतीति निश्चयेन यूयं जानीथ, तत आपृष्टा यूयं इममात्मानं विमुञ्चथ । अद्योद्भिन्नज्ञानज्योतिः अयमात्मा आत्मानमेवात्मनो अनादिबन्धुमुपसर्पति । अहो मदीयशरीरपुत्रस्यात्मन् ! मदात्मनस्त्वं जन्यो न भवतीति निश्चयेन त्वं जानीहि तत आपृष्टस्त्वमिममात्मानं विमुञ्च, अद्योद्भिन्नज्ञानज्योतिरयमात्मा आत्मानमेवात्मनोऽनादिजन्यमुपसर्पति।

क्षेत्रं वास्तु धनं धान्यं, द्विपदश्च चतुष्पदं ।
आसनं शयनं वस्त्रं, भाण्डं बाह्याः परिग्रहाः ॥९१॥

अमी दश परिग्रहा निजात्मनः पृथग्भूता जीवाबद्धा अत एव मूर्च्छया सह यतिभिः सर्वथा त्याज्या । सर्वैर्नरां खनिषु एषु बुधै र्मूर्च्छा न कर्तव्या । संयतजनं शुश्रूषादिहेतवेऽसंयमकरोऽसंयतजनः छात्रो वा स्वान्ते न रक्षणीयः । वसत्यादौ परवस्तुनि मङ्गकारण स्वामित्वं न विधेयम् ।

क्षेत्रपरिग्रहदोषमाह–

क्षेत्रं क्षेत्रभृतां क्षेम–माक्षेत्रज्ञ्यं मृषा न चेत् ।
अन्यथा दुर्गतेः पन्था, बह्वारम्भानुबन्धनात् ॥९२॥

वास्तुपरिग्रहदोषमाह–

पञ्चसूनाद् गृहाच्छ्रेयं, वरं संवेगिनां वनं ।
पूर्वं हि लब्धलोपार्थ–मलब्धप्राप्तये परम् ॥९३॥
विवेकशक्तिवैकल्याद्, गृहद्वन्द्वनिषद्वरे ।
मग्नः सीदत्यहो लोकः, शोकहर्षभ्रमाकुलः ॥९४॥

भूमिलुब्धस्यापायावद्यं दृष्टान्तेन स्पष्टयति

तत्तादृक्साम्राज्य– श्रियं भजन्नपि महीलवं लिप्सुः ।
भरतोऽवरजेन जितो, दुरभिनिविष्टः सतामिष्टः ॥९५॥

धनगृध्नोर्महापापप्रवृत्तिं प्रवक्ति

जन्तून् हन्त्याह मृषां चरति चुरां ग्राम्यधर्ममाद्रियते ।
खादत्यखाद्यमपि धिग्, धन मानयन् पिबत्यपेयमपि ॥
धनेश्वराभिच्छन्दानुवृत्तिवशाद् भृत्यजनस्य भवन्त कार्यमाह
हसति हसति स्वामिन्युच्चै रुदत्यतिरोदिति,
गुणसमुदितं दोषापेतं प्रणिन्दति निन्दति ।
कृतपरिकरं स्वेदोद्गारि प्रधावति धावति,
धनलवपरिक्रीतं यन्त्रं प्रनृत्यति नृत्यति ॥९७॥
उद्भूताः प्रथयन्ति मोहमसमं, नाशे महत्त्वं नृणां,
सन्तापं जनयन्त्युपार्जनविधौ क्लेशं प्रयच्छन्ति च ,
एता नीलपयोदगर्भविलसद् विद्युल्लता चञ्चलाः ।
काले कुत्र भवन्ति मानवततेः, क्षेमावहाः सम्पदः ॥९८॥
पूज्यते यदपूज्योऽपि, यदगम्योऽपि गम्यते ।
वन्द्यते यदवन्द्योऽपि, स प्रभावो धनस्य हि ॥९९॥
सत्यं परित्यजति मुञ्चति बन्धुवर्गं,
शीघ्रं विहाय जननीमपि जन्मभूमिं ।
सन्त्यज्य गच्छति विदेशमभीष्टलोकं,
वित्ताकुलीकृतमतिः, पुरुषोऽत्र लोके ॥१००॥
दैन्यभाषणनिघृंणत्वकृपणत्वानवस्थितचित्तत्वदोषावहत्वेन धनानि

जुगुप्सते–

**भीमैरयजुषां पुरस्कदुवदु देहीति ही भाषते,**

**देहीत्युक्तिहतेषु मुञ्चति हहा नास्तीति वाग्सायकान् ।**

**तीर्थेऽपि व्ययमात्मनो वधमभिप्रैतीति कर्तव्यता,**

**चिन्तां चान्वयते यदस्यमितधी स्तेभ्यो धनेभ्यो नमः ॥**

धनस्यार्जनरक्षणादिना तीव्रदुःखकरत्वात्तत्प्राप्ति प्रत्युद्यमं कृतीनां निराकुरुते–

**यत्प्रत्यर्थं कथमप्युपार्ज्य विधुराद्यन्तरस्याखिलः,**

**खे पक्षीव पलं तदर्थिभिरलं दुःखायते मृत्युवत् ।**

**तल्लाभे गुरुपुण्डरीकमिहिका–प्रस्कन्द लोभोद्भव–**

**प्राग्भल्लीपरमाणुलोलितमनस्युत्तिष्ठते कः सुखी ॥२॥**

बहिरात्मनो धनार्जनभोजनोन्मादप्रवृत्तं निःशङ्कपापकरणं स्वच्छन्द मैथुनाचरणं च दूषयन्नाह–

**धनाद्यन्नं तस्मादसव इति देहात्ममतयो,**

**मनुंमान्या लब्धुं धनमधमशङ्का विदधते ।**

**वृषस्यन्ति स्त्रीरप्यदयमशनोद्भिन्नमदना,**

**धनस्त्रीरागो वा ज्वलयति कुज्ञानप्यमनसः ॥३॥**

गृहं परित्यज्य तपस्यतो निर्विघ्नां मोक्षपथप्रवृत्तिं कथयति –

प्रज्ञाग्रद्वैराग्यः समयदलनदलगःस्वसमयः,
सहिष्णुः सर्वोर्मीनपि सदनदर्थस्पृशि दृशि ।
गृहं पापप्रायक्रियमिति तदुत्सृज्य मुदितः,
तपस्यन्निःशल्यः शिवपथमजस्रं विहरति ॥४॥

देहात्मभेदभावनानिरुद्धविकल्पजालस्य मान्वोः शुद्धस्वात्मोपल म्भमभिनन्दति

नीरक्षीरवदेकतां कलयतो, रप्यङ्गपुंसोरचित्,
चिद्रूपाद्याद्दि भेद एव तदलं, भिन्नेषु को मिद्भ्रमः ।
इत्यागृह्य परावपोह्य सकलोन्मीलद्विकल्पच्छिदा ।
स्वच्छेन स्वनितेन कोऽपि सुकृती, स्वात्मानमास्तिघ्नुते ॥

शुद्धस्वात्मोपलम्भोन्मुखस्य योगकाष्ठासौष्ठवावाप्ति भवितव्य-
ताऽनुभावभावनामनुभावयति-

भावैर्वैभाविकैर्मे परिणतिमयतो ऽनादिसन्तानवृत्त्या,
कर्मव्यैरेकलोलीभवत उपगतैः पुद्गलैस्तत्स्वतः स्वं ।
बुद्ध्वा श्रद्धाय साम्यं निरुपधि दधतो मुत्सुधाब्धावगाधे,
स्याच्चेल्लीलाऽवगाहस्तदयमघशिखी किं ज्वलेद् दाह्यशून्यं ।

ॐ ह्रीं उत्तमाकिञ्चन्यधर्माङ्गाय नमः
आकिञ्चन्यं ममत्वादि-कृतदूरं सुखाकरं ।
पूजया परया भक्त्या, पूजयामि तदाप्तये ॥

ॐ ह्रीं परमब्रह्मणो उत्तमाकिञ्चन्यधर्माङ्गाय नमः
जलाद्यर्घ्यं निर्वपामीति स्वाहा ।

# उत्तमब्रह्मचर्यधर्मः

## मङ्गलाचरणम्

शश्वच्चेतयते यदुत्सवमयं ध्यायन्ति यद् योगिनो,
येन प्राणिति विश्वमिन्द्रनिकरा यस्मै नमः कुर्वते ।
वैचित्री जगतो यतोऽस्ति यदहो यस्यान्तरप्रत्ययो
मुक्तिर्यत्प्रलयस्तदस्तु मनसि स्फूर्जत् परं ब्रह्म मे ॥१॥

श्रीमज्जिनेन्द्रकथिताय सुमङ्गलाय,
लोकोत्तमाय शरणाय विनेयजन्तोः ।
धर्माय कायवचनाशयशुद्धितोऽहं,
स्वर्गापवर्गफलदाय नमस्करोमि ॥२॥

ब्रह्मचर्यप्रशंसामाह—

ब्रह्मसंचेतसां पादौ, चक्रवर्त्यादयो नराः ।
नमन्ति भक्तिभारेण, का कथाऽन्यनृपेषु च ॥३॥
इन्द्राद्याः हि सुराः सर्वे, शिरसा प्रणमन्ति भो ! ।
भक्तिभारेण सन्नताः, पादौ ब्रह्मव्रतात्मनाम् ॥४॥

सद्ब्रह्मचर्यं व्रतरत्नमानसः,
कान्तांगनौघैः कमनीयमूर्तिमान् ।

सज्ज्ञानदृग्वीर्यसुखैकसागरः,
सुसिद्धिवध्वाननदर्पणः ॥५॥

धीरैर्वीरैर्नरैर्दक्षै–र्ज्ञानिभिर्व्रततत्परैः,
ब्रह्मचर्यं व्रतं धर्तुम्, शक्यते न च कातरैः ॥६॥

नाल्पसत्त्वैर्न निःशीलैर्न दीनैर्नाक्षनिर्जितैः ।
स्वप्नेऽपि चरितुं शक्यं, ब्रह्मचर्यमिदं नरैः ॥७॥

एकमेव व्रतं श्लाघ्यं, ब्रह्मचर्यं जगत्त्रये ।
यद्विशुद्धिं समापन्नाः, पूज्यन्ते पूजितैरपि ॥८॥

ब्रह्मव्रतमिदं जीयाच्चरणस्यैव जीवितम् ।
स्युः सन्तोऽपि गुणा येन, विना क्लेशाय देहिनां ॥९॥

कर्मणां शोषणं श्रेष्ठं, ब्रह्मचर्यं सुरक्षितं ।
सारभूतं चरित्रस्य, देवैरपि पूजितम् ॥१०॥

ज्ञानं ब्रह्म दया ब्रह्म, ब्रह्म कामविनिग्रहः ।
सम्यगत्र वसन्नात्मा, ब्रह्मचारी भवेन्नरः ॥११॥

ब्रह्मचर्यं बुधा सेव्यं परमं धर्मकारणं ।
धर्मार्थिभि विधाय स्वा–न्वासना सकलस्त्रियः ॥१२॥

स्वपुत्री भगिनीमातृ–समाः पश्यति यः सदा ।
त्यक्त्वा च मनसा रामां, ब्रह्मचारी भवेत् स ना ॥१३॥

मैथुनं ये न सेवन्ते, ब्रह्मचारी दृढव्रती ।
ते संसारसमुद्रस्य, पारं गच्छन्ति मानवाः ॥१४॥
दिनैकं ब्रह्मचर्यं यो, रक्षेत्तस्मात्ततः ।
नवलक्षजीवानां वै तस्य पुण्यं न वेदम्यहम् ॥१५॥
स्त्रीयोनिस्थानसम्भूत–जीवघातमयाद्यो ।
स्त्रियं नो रमते त्रेधा, ब्रह्मचारी स तत्त्वतः ॥१६॥
मलबीजं मलयोनिं गलन्मलं पूतगन्धिबीभत्सं ।
पश्यन्नङ्गमनङ्गाद्, विरमति यो ब्रह्मचारी सः ॥१७॥
तथा सर्वदा पाल्यं, शीलसन्तोषधारिभिः ।
भेदाभेदेन संयुक्तं, सद्गुणानां प्रसादतः ॥१८॥
"चरणं ब्रह्मणि स्वस्मिन्, ब्रह्मचर्यं तदुच्यते"
निरस्तान्याङ्गरागस्य, स्वदेहेऽपि विरागिणः ।
जीवे ब्रह्मणि या चर्या, ब्रह्मचर्यं तदीर्यते ॥१९॥
विन्दन्ति परमं ब्रह्म, यत्समालम्ब्य योगिनः ।
तद्व्रतं ब्रह्मचर्यं स्याद् धीरधौरेयगोचरम् ॥२०॥
दिवसेन विना सूर्यो, यथा नैवोपलभ्यते ।
तथा सर्वव्रतं वर्षे ब्रह्मचर्यं विना न च ॥२१॥
अन्यव्रतच्युतं ह्येकं, श्लाघ्यं ब्रह्मव्रतं भुवि ।

तद्विना न च सत्पुंसां, सर्वव्रतसमुत्कटम् ॥२२॥
मातृस्वसृसुतातुल्यं, दृष्ट्वा स्त्रीत्रिककल्पकं ।
स्त्रीकथाविनिवृत्ति र्या ब्रह्म स्यात् तन्मतं सताम् ॥२३॥
बालाः पुत्रीमिव बुधः सम्प्रौढा भगिनीमिव ।
जननीमिव वृद्धा स्तु पश्यति स्म जितेन्द्रियः ॥२४॥
परस्त्रींमातृवद् वृद्धां, कुर्वीत भगिनीमिव ।
बालां दुहितृवत् पश्यन्, बिभर्ति ब्रह्म निर्मलम् ॥२५॥
देहद्रविणसंस्कार—समुपार्जनवृत्तयः ।
जितकामे वृथा सर्वाः, तत्कामः सर्वदोषभाक् ॥२६॥
शीतचित्त ! निवृत्तं चेत्, ननु वित्तं किमीहसे ।
मृतमण्डनकल्पो हि, स्त्रीनिरीहे धनग्रहः ॥२७॥
असार एष संसारः, सारं सारङ्गलोचना ।
तदर्थं धनमिच्छन्ति, तत्त्यागे तु धनेन किम् ॥२८॥
सौम्यधातुक्षये पुंसां, सर्वधातुक्षयो यतः ।
तस्मात्तं रक्षयेद् यस्मात्, मूलोच्छेदं न कारयेत् ॥२९॥
स्वकीयं परकीयं वा, नारीणां त्यागतो ध्रुवं ।
ब्रह्मचर्यं समाख्यातं, विद्वद्भिर्ज्ञानशालिभिः ॥३०॥
"एकतश्चतुरो वेदाः ब्रह्मचर्यंमथैकतः"

शीलानामुत्तमं शीलं, व्रतानामुत्तमं व्रत ।
ध्यानानामुत्तमं ध्यानं, ब्रह्मचर्यं सुरक्षितम् ॥३१॥
ब्रह्मचर्यं भवेन्मूलं, सर्वेषां व्रतधारिणां ।
ब्रह्मचर्यस्य भङ्गेन, व्रताः सर्वे निरर्थकाः ॥३२॥
धर्मभूमौ स्वभावेन, मनुष्यो नियतस्मरः ।
यज्जात्यैव परां जातिं, बन्धुलिङ्गिस्त्रियस्त्यजेत् ॥३३॥
एकरात्रौ व्रतस्याऽपि, या गतिः ब्रह्मचारिभिः।
तस्य जिह्वासहस्रेण, वक्तुं शक्यो न युधिष्ठिर ।
नैष्ठिकं ब्रह्मचर्यं तु, ये चरन्ति मुनीश्वराः ।
देवानामपि ते पूज्याः, पवित्रास्ते भुवनत्रय् ॥३४॥
यः करोति गुरुभाषितं मुदा, संश्रये वसति वृद्धसंकुले ।
मुञ्चति तरुणलोकसङ्गतिं, ब्रह्मचर्यममलं स रक्षति ॥३५॥
'भवेच्च लोके गुरुमूलवासः, स्याद् ब्रह्मचर्यं सुविरागता च"
"ब्रह्मव्रते परिनिष्ठो, भव्यजीवो लौकान्तिको भवेत्"
प्रविश्यतोऽङ्गनावर्गे, १ सर्वत्राऽप्यप्रमादकः ।
ब्रह्मचर्यं यतिःशक्तो, रक्षितुं न परः पुनः ॥३६॥

१ बाला कुमारी युवति मध्यमा वृद्धा, सुरूपा कुरूपा इत्यादि विचित्रस्त्रीभेदे ।

ब्रह्मचर्यमपि पालय सारं,
धर्मसारगुणदं भवतारम् ।
स्वर्गमुक्तिगृहप्रापणहेतुं,
दुःखसागरविलङ्घनसेतुम्     ॥३७॥

संसाराम्बुधितारकं, सुखकरं देवैः सदा पूजितं,
मुक्तिद्वारमपारपुण्यजनकं,धीरैः सदा सेवितं ।
सम्यग्दर्शनबोधवृत्तगुणसद्-भाण्डं पवित्रं परं,
अत्रामुत्र च सौख्यगेहमपरं, त्वं ब्रह्मचर्यं भज     ॥३८॥

ब्रह्मचर्यस्य शुद्धस्य, सर्वभूतहितस्य च ।
पदे पदे पुण्यफला, पृथ्वी तस्य युधिष्ठिर !     ॥३९॥

ऐश्वर्यौदार्यशौडीर्य—धैर्यसौदर्यवीर्यता ।
लभेताद्भुतसंचारांश्चतुर्थव्रतपूतधीः     ॥४०॥

रक्ष्यमाणे हि वृहन्ति, यत्राऽहिंसादयो गुणाः ।
उदाहरन्ति तद्ब्रह्म, ब्रह्मविद्याविशारदाः     ॥४१॥

मृदुशय्या नवं वस्त्रं, ताम्बूलं स्नानमण्डनम्
दन्तकाष्ठं सुगन्धं च, ब्रह्मचर्यस्य दूषणम् ।

सव्वेसिं इत्थीणं जो अहिलासं ण कुव्वदे णाणी,
मणवाया काएण य, बंभवई सो हवे सदओ     ॥४२॥

अनेकानि सहस्राणि, कुमारा ब्रह्मचारिणः ।
दिवं गता हि राजेन्द्र ! अकृत्वा कुलसन्तति ॥४३॥
वासुपूज्यस्तथा मल्लि, र्नेमिः पार्श्वश्च सन्मतिः ।
कुमाराः पञ्च निष्क्रान्ताः, पृथिवीपतयः परे ॥४४॥
समसुखशीलितमनसा—मशनमपि द्वेषमेति किम् कामः ।
स्थलमपि दहति भषाणां, किमङ्ग ! पुनरङ्गमङ्गाराः ॥

द्विजराजमुखी मृगराजकटी ।
तरुराजविराजितबिम्बतटी,
यदि सा वनिता हृदये वसति ।

क्व जप क्व तपः क्व समाधिरतिः ॥४६॥
कामिनीकायकान्तारे:,कुचपर्वतदुर्गमे ।
मा सचर मनःपान्थः, तत्राऽऽस्ते स्मरतस्करः ॥४७॥
दुग्धाद्याः सबलाहाराः, सुस्वादा मोदकादयः,
कामाग्निदीपका ग्राह्या, न क्वचित-ब्रह्मकाङ्क्षिभिः,
यथा तृणादिसंयोगैः प्रादुर्भवेद् गृहेऽनलः ।
तथा काये च कामाग्निः सबलाहारसेवनैः ॥४९॥

ब्रह्मचर्यव्रतस्य पञ्चभावनामाह—

स्त्रीरूपमुखभृङ्गार—विलासाङ्गनिरीक्षणं ।

पूर्वानुभूतसद् भोग—रत्यादिस्मरणोज्झनम् ।।५०।।
स्त्रीश्रृङ्गारकथात्यागः, सरसान्नादिसेवनं ।
कामिनीजनसंसक्त—वसतित्यजनं सदा ।।५१।।
पञ्चेमा भावनाः शुद्धाः,ब्रह्मव्रतविशुद्धिदाः ।
न मोक्तव्या हृदो जातु, मुनिभिर्ब्रह्मशुद्धये ।।५२।।

रामारागकथा श्रुतौ श्रुतिपरि—भ्रष्टोऽसि चेद् भ्रष्टदृक्,
तद्रम्याङ्गनिरीक्षणे भवसि चेत् तत्पूर्वभुक्तावसि ।
निःसंज्ञो यदि वृष्यवाञ्छितरसाद्यादेऽरसज्ञोऽसि चेत्,
संस्कारे स्वतनोः कुजोऽसि यदि तत् सिद्धोऽसि तुर्यव्रते ।।

ब्रह्मचर्यलक्षणमाह—

प्रादुःषन्ति यतः फलन्ति च गुणाः सर्वेऽप्यखर्वौजसः,
यत्प्रह्वीकुरुते चकास्ति च यतस्तद्ब्रह्ममुच्चैर्महः ।
त्यक्त्वा स्त्रीविषयस्पृहादि दशधाऽब्रह्मामलं पालय,
स्त्रीवैराग्यनिमित्तपञ्चकपरस्तद्ब्रह्मचर्यं सदा ।।५४।।

ब्रह्मणि आत्मनि चरतीति ब्रह्मचर्यम्, ब्रह्मशब्दोऽत्र वीर्य,
वाची वर्तते तस्य वीर्यस्य चर्यं रक्षणं ब्रह्मचर्यमुच्यते ।
यो मुनिर्गाढं स्त्रीषु विरक्तो जायते तत् ब्रह्मचर्यमुच्यते ,
शीलं स्वभावो ब्रह्मचर्यं एतानि ब्रह्मचर्यस्य नामानि

सर्वशीलगुणाधारान्, त्रिश्वातिशयभूषितान् ।
वन्देऽर्हत इहामुत्र, त्रिजगच्छर्मकारकान् ॥५६॥
"अथ वक्ष्ये समासेन, शीलानि सकलान्यपि"
त्रियोगाः करणं त्रेधा, चतुःसंज्ञाक्षपञ्च वै ।
दशपृथ्व्यादिकायाश्च, धर्माः क्षमादयो दश ॥५७॥
अन्योऽन्यं गुणिता एते, योगाद्याः श्रुतकोविदैः ।
अष्टादशसहस्राणि, शीलानि स्युर्महात्मनाम् ॥५८॥

शीललक्षणमाह–

संसारारातिभीतस्य, व्रतानां गुरुसाक्षिणां ।
गृहीतानामशेषाणां, रक्षणं शीलमुच्यते ॥५९॥
शीलेन रक्षितो जीवो, न केनाऽप्यभिभूयते ।
महाह्रदनिमग्नस्य, किं करोति दवानलः ॥६०॥
शीलं सत्स्वभावोऽत्र, शीलं च व्रतरक्षणम् ।
ब्रह्मचर्यात्मकं शीलं शीलं, सद्गुणपालनम् ॥६१॥

अष्टादशसहस्रभेदभिन्नशीलधारिणा मुनिना दशविधशीलविराधना त्याज्याः तद्यथा–

स्त्रीगोष्ठिवृष्यभुक्तिश्च, गन्धमाल्यादिवासनं ।
शयनासनमाकल्पं, षष्ठं गान्धर्ववासितम् ॥६२॥

अर्थसंग्रहः दुःशील—सङ्गती राजसेवनं ।
रात्रौ सञ्चरणं चेति, दश शीलविराधनाः ॥६३॥

शीलप्रशंसामाह

शीलेन प्राप्यते सौख्यं, शीलेन विमलं यशः ।
शीलेन लभ्यते मोक्षः, तस्माच्छीलं वरं व्रतम् ॥६४॥
शीलेन शोभना नार्यः, शीलेन सुगुणाः सदा ।
शीलेन सम्पदः सर्वाः शीलतो नापरं शुभम् ॥६५॥

"शील दुर्गतिनाशनम्"

सीता सुरैः सदा पूज्या, जाता मन्दोदरी तथा ।
शीलात् मदनमञ्जुषा, जुष्टा योग्यगुणैरभूत ॥६६॥
"शीलप्रभावतो नूनं, किङ्करा हि सुराऽसुराः"
"शीलवान् महतां मान्यो, जगतामेक मण्डनम्"
शीलाभरणयुक्ताश्च त्रिजगच्छ्रीः स्वयं मुदा ।
वृणोत्येत्य जिनश्रीश्च, मुक्तिरालोकते मुहुः ॥६७॥
प्रकम्पन्ते सुरेशानां, शीलेनात्रासनानि भोः ।
किङ्करा इव सेवन्ते, पादान् शीलजुषां सुराः ॥६८॥
जलति ज्वलनः कन्धिः, स्थलति श्वति केसरी ।
पुष्पमालायते सर्पः स्त्रीपुंसां शीलधारिणाम् ॥६९॥

मुक्तिनारी वृणोत्येव, शीलाभरणभूषितं ।
मुनिं रागेण चागत्य, का कथा स्वर्गयोषिताम् ॥७०॥

शीलं सौख्यकरं प्रमोदजनकं, शीलं कुलोद्योतकं
शीलं सारविभूषणं गुणकरं, शीलं च लक्ष्मीकरं
शीलं स्वव्रतरक्षणं शुभकरं, शीलं यशः कारणम्
तस्माद् भव्यजना ! जिनेन्द्रकथितं शीलं श्रयन्तु त्रिधा ॥

शीलं विनर्निलकुलं सहगानिबन्धु,
शीलं बलं निरुपमं धनमेव शीलं ।
पाथेयमक्षयमलं निरपायरक्षा,
साक्षादिदं गुणमिति प्रवदेज्जिनेन्द्रः ॥७२॥

व्याघ्रव्यालजलानलादिविपदस्तेषां व्रजन्ति क्षयं,
कल्याणानि समुल्लसन्ति विबुधाः सानिध्यमध्यासते ।
कीर्तिः स्फूर्तिमियर्ति यात्युपचयं धर्मः प्रणश्यत्यघम्
स्वर्निर्वाणसुखानि संविदधते ये शीलमाबिभ्रते ॥७३॥

विशदचन्द्रकरद्युति निर्मला,
भवति कीर्तिरनुत्तरसम्भवः ।
जिनपते र्वचनामृतपायिनाम्,
विमलशीलवतामिह देहिनाम् ॥७४॥

विघटन्ते सुशीलानां, सर्वोपद्रवकोटयः ।
निर्गला भ्रमेत् कीर्ति, श्चन्द्रांशुवज्जगत्त्रये ॥७५॥
जीवितव्यं दिनैकं च, वरं शीलवतां भुवि ।
निःशीलानां वृथा नूनं, पूर्वकोटिशतप्रमम् ॥७६॥
शीलं प्रधानं न कुलं प्रधानं,
कुलेन, किं शीलविवर्जितेन ।
बहवो नरा नीचकुलेषु जाताः ।
स्वर्गं गता शीलमुपेत्य धीराः ॥७७॥
शीलसंधारिणां पुंसां, मनुष्येषु सुरेषु च ।
आत्मा गौरवमायाति, परत्रेह च सन्ततम् ॥७८॥
धनहीनो ऽपि शीलाढ्यः पूज्यः सर्वत्र विष्टपे ।
शीलहीनो धनाढ्योऽपि न पूज्य स्वजनेष्वपि ॥७९॥
तरुणस्यापि वैराग्यं, शीलवृद्धेन जायते ।
क्रियते प्रस्नुतक्षीरा, वत्सस्पर्शेन गौ र्न किम् ॥८०॥

दशविधमैथुनलक्षणमाह—

पर्यन्तविरसं विद्धि, दशधाऽन्यच्च मैथुनं ।
योषित्सङ्गाद् विरक्तेन, त्याज्यमेव मनीषिणा ॥८१॥
आद्यं शरीरसंस्कारो, द्वितीयं वृष्यसेवनम् ।

तौर्यत्रिकं तृतीयं स्यात्, संसर्गस्तुर्यमिष्यते ॥८२॥
योषिद्विषयसंकल्पः, पञ्चमं परिकीर्तितं।
तदङ्गवीक्षणं षष्ठं, संस्कारः सप्तमं मतम् ॥८३॥
पूर्वानुभोगसंभोग—स्मरणं स्यात्तदष्टमम्।
नवमं भाविनी चिन्ता, दशमं वस्तिमोक्षणम् ॥८४॥
किम्पाकफलसंभोग—सन्निभं तद्धि मैथुनं।
आपातमात्ररम्यं स्याद्, विपाकेऽत्यन्तभीतिदम् ॥८५॥
जो परिहेरदि संगं, महिलाणं णेव पस्सदे रूवं।
कामकहादिनिरीहो, णवविहं बंभं हवे तस्स ॥८६॥
मा रूपादिरसं पिपास सुदृशां, मा वस्तिमोक्षंकृथा,
वृष्यं स्त्रीशयनादिकं च भज मा, मा दा वराङ्गे दृशं।
मा स्त्रीं सत्कुरु मा च संस्कुरु रतं, वृत्तं स्मरस्मायंमा,
वर्त्स्यन्तमिच्छ जुषस्व मेष्टविषयान्, द्विःपञ्चधा ब्रह्मणे ॥

मैथुनसेवनदुष्फलमाह

आयुस्तेजो बलं वीर्यं, प्रज्ञा श्रीश्च महायश।
पुण्यं सुप्रीतिमत्वं च, हन्यतेऽब्रह्मसेवया ॥८८॥
अकालजरया युक्तः, पुरुषः स्त्रीनिषेवणात्
अथवा यक्ष्मणाः युक्तः, तस्माद् युवतं निषेवयेत् ॥८९॥

रम्यमापातमात्रेण, परिणामेऽतिदारुणम् ।
किंपाकफलसंकाशं, तत्कः सेवेत मैथुनम् ॥९०॥
विरज्य कामभोगेषु, ये ब्रह्म समुपासते ।
एते दश महादोषाः, तैस्त्याज्या भावशुद्धये ॥९१॥
गूथकीटो यथा गूथे, रतिं कुरुत एव हि ।
तथा स्त्र्यमेध्यसंजातः, कामी स्त्री विडतो भवेत् ॥९२॥
काकः कृमिकुलाकीर्णं, करङ्कं कुरुते रतिम् ।
यथा तद्वत्तराकोऽयं, कामी स्त्रीगुह्यमन्थने ॥९३॥

मैथुनसंज्ञाकारणमाह-

वृष्यभोगोपयोगाभ्यां, कुशीलोपसनादपि ।
पुंवेदोदीरणात् स्वस्थः, कः स्यान् मैथुनसंज्ञया ॥९४॥
यौवनेन्धनसंयोगाद्, रामाघ्रातप्रप्रेरणात् ।
सबलाहारतैलेन, कामाग्निः प्रकटो भवेत् ॥९५॥
दृश्यन्ते भुवने दोषा, यावन्तो दुःखदायिनः ।
पुरुषस्य क्रियन्ते ते, सर्वे मैथुनसंज्ञया ।
अनर्थकारणं पुंसां, कलत्रे स्वेऽपि मैथुनं ।
करोति कल्मषं घोरं, परकीये न किं पुनः ॥९६॥
मैथुनाचरणे मूढ ! म्रियन्ते जन्तुकोटयः ।

योनिरन्ध्रसमुत्पन्ना, लिङ्गसंघट्टपीडिताः ॥९७॥

मेहुणसण्णारुढो, मारई णवलक्खसुहुमजीवाई ।

इय जिणवरेहिं भणियं, बज्झभंतरणिग्गंथरूवेहिं ॥९८॥

अनेकदुःखसन्तान-निदानं विद्धि मैथुनं ।

कथं तदपि सेवन्ते, हन्त रागान्धबुद्धयः ॥९९॥

ग्लानि मूर्च्छा भ्रमः कम्पः, श्रमस्वेदोऽङ्गविक्रिया ।

क्षयरोगादयो दोषा, मैथुनोत्था शरीरिणाम् ॥१००॥

ब्रह्मचर्यच्युत श्वेव, सर्वत्र चापमन्यते ।

मुनिभिः सुजनैः प्राणो, इहामुत्रेति दुःखभाक् ॥१॥

ब्रह्मचर्यच्युतः सद्यो, महानप्यवमन्यते ।

सर्वैरपि जनै लोके, विध्यात इव पावकः ॥२॥

स्त्रीवैराग्यपञ्चकभावनया प्राप्तस्त्रीवैराग्यो ब्रह्मचर्यम् वर्धयेति शिक्षयति

नित्यं कामाङ्गनासङ्ग-दोषाऽशौचानि भावयन् ।

कृतार्यसङ्गतिः स्त्रीषु, विरक्तो ब्रह्म बृंहय ॥३॥

कामदोषात् प्राह-

ज्येष्ठे ज्योत्स्नेऽमले व्योम्नि, मूले मध्यंदिने जगत् ।

दहन् कथञ्चित् तिग्मांशुश्चिकित्स्यो न स्मरानलः ॥४॥

हारो जलार्द्रवसनं नलिनीदलानि
प्रालेयशीकरमुचस्तुहिनांशुभासः ।
यस्येन्धनानि सहसानि च चन्दनानि,
निर्वाणमेष्यति कथं स मनोभवाग्निः ॥५॥

चन्द्रः पतङ्गति भुजङ्गति हारवल्ली,
स्रक्चन्दनं विषति मुर्मुरतीन्दुरेणुः ।
तस्याः कुमार ! भवतंतोविरहातुरायाः,
किं नाम ते कठिनचित्त ! निवेदयामि ॥६॥

एक एव स्मरो वीरः, स चैकोऽचिन्त्यविक्रमः ।
अवज्ञयैव येनेदं, पादपीठीकृतं जगत् ॥७॥

पीडयत्येव निःशङ्को, मनोभू र्भुवनत्रयम् ।
प्रतीकारशतेनापि, यस्य भङ्गो न भूतले ॥८॥

सिक्तोऽप्यम्बुधरव्रातैः, प्लावितोऽप्यम्बुराशिभिः ।
न हि त्यजति सन्तापं, कामवह्निः प्रदीपितः ॥९॥

हृदि ज्वलति कामाग्निः पूर्वमेव शरीरिणाम् ।
भस्मसात्कुरुते पश्चा- दङ्गोपाङ्गानि निर्दयः ॥१०॥

कुलशीलतपोविद्या-विनयादिगुणोच्चयं ।
दन्दह्यते स्मरो दीप्तः, क्षणात्तृण्यामिवानलम् ॥११॥

जानन्नपि न जानाति, पश्यन्नपि न पश्यति ।
लोकः कामानलज्वाला—कलापकवलीकृतः ॥१२॥
विरूत्तबलस्यान्तं, स्वकुलस्य च लाञ्छनं ।
मरणं वा समीपस्थं, न स्मरार्तः प्रपश्यति ॥१३॥
नोपकारं कुलीनोऽपि, कृतघ्न इव मन्यते ।
लज्जालुरपि निर्लज्जो, जायते मदनातुरः ॥१४॥

"कामलुब्धे कुतो लज्जा"

न पिशाचोरगा रोगा न दैत्यग्रहराक्षसाः ।
पीडयन्ति तथा लोकं, यथाऽयं मदनज्वरः ॥१५॥
दक्षो मूढः क्षमी क्षुद्रः, शूरो भीरु र्गुरु र्लघुः ,
तीक्ष्णः कुण्ठो वशी भ्रष्टो, जनः स्यात् स्मरवञ्चितः ॥
कालकूटादहं मन्ये, स्मरसंज्ञं महाविषम् ।
स्यात्पूर्वं सप्रतीकारं, निःप्रतीकारमुत्तरम् ॥१७॥
रागो द्वेषो मदोऽसूया, पैशून्यं कलहो रतिः ।
वचनेर्ष्या परा भूति, र्दोषाः सन्ति स्मरातुरे ॥१८॥
दुर्मोचैःकामिनीपाशैः, कामी वेष्ट्यते कुधीः ।
लालापाशै रिवात्मानं, कोशकार कृमिःस्वयम् ॥१९॥

शीलशालमतिक्रम्य, धीधनैरपि लङ्घ्यते ।
दासत्वमन्त्यजस्त्रीणां, संभोगाय स्मराज्ञया ॥२०॥
अनासाद्य जनः कामी, कामिनीं हृदयप्रियां ।
विषशस्त्रानलोपायैः, सद्यः स्वं हन्तुमिच्छति ॥२१॥
कामी शूरोऽपि तीक्ष्णोऽपि, मुख्योऽपि भवन्ति स्फुटं ।
विगर्वः श्रीमतो वश्यो, वंद्यस्य गहवानिव ॥२२॥
न पश्यति सनेत्रोऽपि, सश्रोत्रोऽपि शृणोति न ।
कामार्तः प्रमदाकाङ्क्षी, दन्तीव हतचेतनः ॥२३॥
मैथुनाऽऽचरणे कर्म, निघृणैः क्रियतेऽधमम् ।
पीयते वदनं स्त्रीणां, लालाम्बुकलुषीकृतम् ॥२४॥
कण्डूयनतनुस्वेदाद्, वेत्ति कुष्ठी यथा सुखम् ।
तीव्रस्मररुजातङ्क,—पीडितो मैथुनं तथा ॥२५॥
शीतमुष्णं क्षुधां तृष्णां, दुराहारं पथि श्रमम्
दुःशय्यां सहते कामी, वहतेभारमुल्वणम् ॥२६॥
सुखं दुःखं हितं पुण्यं, पापबन्धवधादिकं ।
मरणं वा समीपस्थं,कामी वेत्ति न दुर्गतिम् ॥२७॥
आसने शयने स्थाने, नगरे भवने वने ।
स्वजनेऽन्यजने कामी, रमते नास्तचेतनः ॥२८॥

न रात्रौ न दिवा शेते, न भुङ्क्ते न सुखायते ।
दष्टः कामभुजङ्गेन, न जानाति हिताऽहिते ॥२९॥
कामेन विजितो ब्रह्मा, कामेन विजितो हरिः ।
कामेन विजितः शम्भुः, शक्रः कामेन निर्जितः ॥३०॥
दिवा पश्यति नोलूको, मनुजो रात्रि न पश्यति ।
अपूर्वः कोऽपि कामान्धो दिवारात्रि न पश्यति ॥३१॥
कामाकुलितचित्तस्य, मुहूर्तो वत्सरायते ।
सर्वदोत्कण्ठमानस्य, भवनं काननायते ॥३२॥
मन्दायते मति र्याति, सद्यो वचनकौशलम् ।
मदनेन ज्वरेणेव, बाधितस्य वितापिना ॥३३॥
हस्तन्यस्तकपोलोऽसौ, दीनो ध्यायति सन्ततं ।
प्रस्वेद्यति तुषारेऽपि, कम्पते कारणं विना ॥३४॥
अरत्यग्निशिखाजालै, दुर्वलद्भिरनिवारितैः ।
सोऽन्तर्विदह्यते पीतैः, तप्तैस्ताम्रद्रवैरिव ॥३५॥
काम्यमानं जनं कामी, यदा न लभते कुधीः ।
मुमूर्षति तदोद्विग्नो, नगप्रपतनादिभिः ॥३६॥
घृणास्पदमतिक्रूरं, पापाढ्यं योगिदूषितम् ।
जनोऽयं कुरुते कर्म, स्मरशार्दूलचालितः ॥३७॥

स्नुषां श्वश्रूं सुतां धात्रीं, गुरुपत्नीं तपस्विनीं ।
तिरश्चीमपि कामार्तो, नरः स्त्रीं भोक्तुमिच्छति ॥३८॥
संसर्गाद् दुर्बलां दीनां, सत्रस्तामप्यनिच्छतीम् ।
कुष्ठिणीं रोगिणीं जीर्णां, दुःखितां क्षीणविग्रहाम ॥३९॥
निन्दितां निन्द्यजातीयां, स्वजातीयां तपस्विनीम ।
बालामपि तिरश्चीं स्त्रीं, कामी भोक्तुं प्रवर्तते ॥४०॥

कामदश वेगान् प्राह–

संकल्पाण्डकजातेन, विषयच्छिद्रवासिना ।
रागद्वेषद्विजिह्वेन, वृद्धचिन्तामहाक्रुधा ॥४१॥
दष्टकामभुजङ्गेन लज्जानिर्मोकमोचिना ।
दर्पदंष्टकरालेन, रतिवक्त्रेण नश्यति ॥४२॥
आशीविषेण दष्टस्य, सप्त वेगाःशरीरिणः ।
दष्टस्य स्मरसर्पेण, जायन्ते दश दुःसहाः ॥४३॥
प्रथमे जायते चिन्ता, द्वितीये द्रष्टुमिच्छति ।
तृतीये दीर्घनिश्वासाश्चतुर्थे भजते ज्वरम् ॥४४॥
पञ्चमे दह्यते गात्रं, षष्ठे भक्तं न रोचते ।
सप्तमे स्यात् महामूर्च्छा उन्मत्तत्वमथाष्टमे ॥४५॥

नवमे प्राणसन्देहो, दशमे मुच्यतेऽसुभिः ।
एतै वेंगैः समाक्रान्तो जीवास्तत्त्वं न पश्यति ॥४५॥
संकल्पवशतस्तीव्रा, वेगा मन्दाश्च मध्यमाः ।
कामज्वरप्रकोपेन, प्रभवन्तीह देहिनाम् ॥४६॥
महान्तं दोषमासाद्य, भवेऽत्र स्मरमोहितः ।
मृत्वा कडारपिङ्गोऽगाच्छ्वभ्रं दुःसहवेदनं ॥४७॥

"तत्कथा विस्तरभयान्न लिख्यते"

"ज्ञातुमिच्छुभि रुपासकाध्ययने द्रष्टव्या"

भवन्ति सकला दोषा, नैवामी ब्रह्मचारिणः ।
संपद्यन्ते गुणाश्चित्रा, तद्विपाक्षा विरागिणः ॥४८॥

स्त्रीदोषान् प्राह

धारयन्त्यमृतं वाचि, हृदि हालाहलं विषम् ।
निसर्गकुटिला नार्यो, न विद्मः केन निर्मिताः ॥४९॥
भेत्तुं शूलमसि छेत्तुं, कर्तितुं क्रकचं दृढम् ।
नरान् पीडयितुं यन्त्रं, वेधसा विहिताः स्त्रियः ॥५०॥
कौतुकेन समाहर्तुम्, विश्ववर्त्यङ्गिसंचयम् ।
वेधसेयं कृता मन्ये, नारी व्यसनवागुरा ॥५१॥

सन्ध्येव क्षणरागाढ्या, निम्नगेवाधरप्रिया ।
वक्रा बालेन्दुलेखेव, भवन्ति नियतं स्त्रियः ॥५२॥
शम्पेव चञ्चला नारी, सन्ध्येव क्षणरागिणी ।
छिद्रार्थिनी भुजङ्गीव, शर्वरीव तमोमयी ॥५३॥
हरन्ति मानसं रामा, नराणामनुवर्तनैः ।
तावद् यावन्न जानन्ति, रक्तं कुटिलचेतसः ॥५४॥
हसितैं रोदनै र्वाक्यैः, शपथैर्विविधैं शठा ।
अलीकं मानस पुंसां, गृह्णन्ति कुटिलाशयाः ॥५५॥
निर्दयत्वमनार्यत्वं, मूर्खत्व—मतिचापलम् ।
वञ्चकत्वं कुशीलत्वं, स्त्रीणां दोषाः स्वभावजाः ॥५६॥
यदि मूर्ताः प्रजायन्ते, स्त्रीणां दोषाः कथञ्चन ।
पूरयेयुस्तदा नूनं, निःशेषं भुवनोदरम् ॥५७॥
बाहूभ्यां जलधेःपारं, तीर्त्वा याति परं ध्रुवम् ।
न मायाजलधेः स्त्रीणां, बहुविभ्रमधारिणः ॥५८॥
यदीन्दुस्तीव्रतां धत्ते, चण्डरोचिश्च शीततां ।
दैवात्तथाऽपि नो धत्ते, नरि नारी स्थिरं मनः ॥५९॥
एकं दृशा परं भावै, र्वाग्भिरन्यं तथेङ्गितैः ।
संज्ञयाऽन्यं रतैश्चान्यं, रमयन्त्यङ्गना जनम् ॥६०॥

सिकतातृणकल्लोल–रोमाणि भुवनत्रये ।
यावन्ति सन्ति तावन्ति, मानसानि मृगीदृशाम् ॥६१॥
नगभूमिनभोऽम्भोधि–सलिलं नमस्वतां ।
शक्यते परिमाकर्तुम्, स्त्रीचित्तानां न सर्वथा ॥६२॥
गृह्णन्ति विपिने व्याघ्रं, शकुन्तं गगने स्थितं ।
सरिद्मध्यगतं मीनं, न स्त्रीणां चपलं मनः ॥६३॥
पाषाणोऽपि तरेत्तोये, न दहेदपि पावकः ।
न चित्तं पुरुषे स्त्रीणां, प्राञ्जलं जातु जायते ॥६४॥
क्रुद्धः कण्ठीरवः सर्पः, स्वीकर्तुम् जातु शक्यते ।
न चित्तं दुष्टवृत्तीना–मेतासामतिमोषणम् ॥६५॥
रूपं संरमसे द्रष्टुं, विद्युद्द्योतेन पार्यते ।
चेतश्चलस्वभावानां, योषाणां न कथञ्चन ॥६६॥
दोषान् गुणेषु पश्यन्ति, प्रिये कुर्वन्ति विप्रियं ।
सन्मानिता प्रकुप्यन्ति, निसर्गकुटिलाः स्त्रियः ॥६७॥
कुलजातियशोधर्म–शरीरार्थसमादयः ।
नाश्यन्ते योषया सर्वे, वात्यया तोयदा इव ॥६८॥
गृहीतं शक्यते जातु, परमाणुरपि ध्रुवम् ।
न सूक्ष्मं योषितां स्वान्तं, दुष्टानामिव चञ्चलम् ॥६९॥

विषमध्ये सुधास्यन्दं सस्यजातं शिलोच्चये,
संभाव्यं, न तु संभाव्यं, चेतः स्त्रीणामकश्मलं ।
वन्ध्याङ्गजस्य राज्यश्रीः, पुष्पश्रीर्गगनस्य च,
स्याद् दैवान्न तु, नारीणां, मनःशुद्धि मनागपि ॥७०॥
वञ्चयन्ति नरान् नार्यः, समस्तानपि हेलया ।
जानन्ति वचनं पीनं, तदीयं न नराः पुनः ॥७१॥
देवदैत्योरगव्याल–ग्रहचन्द्रार्क चेष्टितम् ।
विदन्ति ये महाप्राज्ञाः, तेऽपि वृत्तं न योषिताम् ॥७२॥
जलधेर्जलपात्राणि, प्रहाश्च गगनस्य च ।
यान्ति पारं न तु स्त्रीणां, दुश्चरित्रस्य केचन ॥७३॥
सुखदुःखजयपराजय–जीवितमरणानि ये विजानन्ति
मुह्यन्ति तेऽपि नूनं तत्त्वविदः, चेष्टिते स्त्रीणाम् ॥७४॥
भग्नभाण्डे यथा नीरं, क्षीरं श्वानोदरे तथा ।
गुह्यवार्ता तथा स्त्रीणां, हृदये नैव तिष्ठति ॥७५॥
अपक्वे घटे नीरं, चालन्यां सूक्ष्म पिष्टकम् ।
स्त्रीणां च हृदये वार्ता, न तिष्ठति कदाचन ॥७६॥
दोषाणामालया रामा, मीनानामिव वाहिनी ।
गुणानां नाशिका माया, व्रतानामिव जायते ॥७७॥

गुणग्रामविलोपेषु, साक्षाद् दुर्नीतयः स्त्रियः ।
स्वर्गापवर्गमार्गस्य, निसर्गादर्गला इव ॥७८॥
दर्शनात् हरते चित्तं, स्पर्शनात् हरते बलं ।
संभोगात् हरते वीर्यं, नारी प्रत्यक्षराक्षसी ॥७९॥
बन्धने महिला पाशः, खड्गः पुंसां निकर्तने ।
छेदने निशितः कुन्तः, पङ्कोऽगाधो निमज्जने ॥८०॥
नराणां भेदने शूलं, वहने नगवाहिनी ।
मारणे दारुणो मृत्यु, मलिनीकरणे मषी ॥८१॥
अनलो दहने पुंसां, मुद्गरश्चूर्णने परः ।
उत्कलन्ति पवने कण्डूः, करपत्रं विपाटने ॥८२॥
भ्रूर्धनु र्हष्टयो बाणा, त्रिशूलं च बलित्रयम् ।
हृदयं कर्तरी यासां, ताः कथं न तु चण्डिका ॥८३॥
मालतीव मृदून्यासां, विद्धि चाङ्गानि योषिताम् ।
दारयिष्यन्ति मर्माणि, विपाके ज्ञास्यसि स्वयम् ॥८४॥
मनोभवसमं शूरं, कुलीनं भुवनेश्वरम् ।
हत्वा पतिं स्त्रियः सद्यो, रमन्ते चेटिकासुतैः ॥८५॥
कुलजातीगुणभ्रष्टं, निकृष्टं दुष्टचेष्टितम् ।
अस्पृश्यमधमं प्रायो, मन्ये स्त्रीणां प्रियं नरम् ॥८६॥

साकेताधिपति देव-रतिः, प्रच्याव्य राज्यतः ।
देव्या नदी ह्रदे क्षिप्तो, रक्तया पङ्गुरक्तया ॥८७॥
गोपवत्या क्रुधा छित्वा, ग्रामकूटसुता शिरः ।
राजा सिंहबलः कुक्षौ शस्त्र्येर्ष्यापरया हतः ॥८८॥
वीरवत्याऽपि शूलस्थ, स्तेन छिन्नोष्ठया निजः ।
ओष्ठश्छिन्नो ममानेन, पापयेत्युदितं मृषा ॥८९॥
रक्ता देवरतिं सरित्यवनिपं, रक्ताऽक्षिपत्पङ्गुके ।
कान्तं गोपवती द्रवन्तमवधीच्छित्वा सपत्नीशिरा,
शूलस्थेन मलिम्लुचेन, दलितं स्वोष्ठं किलात्मपतिः ।
छिन्नं वीरवतीति, चिन्त्यमबलावृत्तं सुवृत्तं सदा ॥९०॥
जननीं जनकं कान्तं, तनयं सहवासिनं ।
पातयन्ति निताम्बिन्यः, कामार्ता दुःखसागरे ॥९१॥
उपकारं गुणं स्नेहं, सत्कारं सुखलालनं ।
न मन्यते परासक्ता, मधुरं वचनं स्त्रियः ॥९२॥
अकृतेऽप्यपराधे ता, नीचाः स्वच्छन्दवृत्तयः ।
निघ्नन्ति निर्घृणाः पुत्रं, श्वशुरं पितरं पतिं ॥९३॥
स्वल्पेऽपि विहिते दोषे, कृतदोषसहस्रकः ।
उपकारमवज्ञाय, घ्नं निघ्नन्ति पतिं कुलम् ॥९४॥

मत्सरऽविनयाऽऽयास-क्रोधशोकाऽयशोभियां ।
सर्वासां कारणं रामा, विद्याममिव सर्पिणी ॥९५॥
पावकः सुखदारूणां,-दुःखपाथसां-आवासो ।
प्रत्ययोवतरत्नाना-मनर्थानां निकेतनम् ॥९६॥
असत्यानां गृहंयोषा, वञ्चकानां वसुन्धरा ।
कुठारी धर्मवृक्षाणां, सिद्धिसौधमहार्गला ॥९७॥

स्त्रीवाचकशब्दाना निरुक्तिमाह-

दोषाच्छादनतः सा स्त्री, वधूर्बंधविधानतः ।
प्रमदा गादिता प्राज्ञैः, प्रमादबहुलत्वतः ॥९८॥
नारियंतः परोऽस्त्यस्या स्ततो नारी निगद्यते ।
यतो विलीयते दृष्ट्वा, पुरुषं विलया ततः ॥९९॥
कुत्सिताऽनु यतो मारी, कुमारी गदिता ततः ।
बिभेति धर्मकर्मभ्यो, यतो भीरु ततो मता ॥१००॥
यतो लाति महादोषं, महिलाऽभिहिता ततः ।
अबला कथ्यते तेन, न येनास्ति बलं हृदि ॥१॥
जुषते प्रीतितः पापं, यतो योषा ततो मता ।
यतो ललति दुर्वृत्ते, ललना भणिता ततः ॥२॥

नामान्यपि दुरर्थानि, जायन्ते योषितामिति ।
समस्तं जायते प्रायो, निन्दितं पापचेतसाम् ॥३॥

स्त्रीप्रशंसामाह-

यमिभिर्जन्मनिर्विण्णैर्दूषिता यद्यपि स्त्रियः ।
तथाऽप्येकान्ततस्तासां, विद्यते नाघसंभवः ॥४॥
श्लाघ्या भवन्ति नार्योऽपि, शुद्धशीला महीयसा ।
स्त्री पुमानिव कुर्वन्ति, शेमुषीं मन्दमेधसः ॥५॥
निर्विण्णैर्भवसंक्रमाच्छ्रुतधरैरेकान्ततो निःस्पृहैः ।
नार्यो यद्यपि दूषिताः, शमधनैर्ब्रह्मव्रतालम्बिभिः ॥
निन्द्यन्ते न तथाऽपि, निर्मलयमस्वाध्यायवृत्ताङ्किता ।
निर्वेदप्रशमादि, पुण्यचरितैर्या शुद्धिभूता भुवि ॥७॥
सामान्येन ततो नेह, निन्दिताः सन्ति योषितः ।
शुद्धशीला न गच्छन्ति, दूषणं हि कदाचन ॥८॥
शुद्धशीलकलितासु जायते, नाङ्गनासु चरितं मलीमसं ।
आस्पदं हि विदधाति तामसं, हंसरश्मिषु कदाचनापि किं ॥
ननु सन्ति जीवलोके, काश्चिच्छमशीलसंयमोपेताः
निजवंशतिलकभूताः, श्रुतसत्यसमन्विता नार्यः ॥९॥
सतीत्वेन महत्वेन वृत्तेन, विनयेन च ।

विवेकेन स्त्रियः काश्चिद्, भूषयन्ति धरातलम् ॥१०॥

साध्वीस्त्रिवर्गविधिसाधनसावधाना,
कोपे पदंशमधुरप्रणयानुभावाः ।
लावण्यवारितरगात्रलताः समान—
सौख्यासुखाः सुकृतिनः सुदृशो लभन्ते ॥११॥

व्यालोलनेत्रमधुपाः, सुमनोऽभिरामाः,
पाणिप्रवालरुचिराः, सरसाः कुलीनाः ।
आनृण्यकारणसुपुत्रफलाः पुरन्ध्र्यो,
धन्यं लतास्य इव, शालिनमाश्रजन्ते ॥१२॥

लोलत्वं नयनयुगे न चित्तवृत्तौ,
मन्दत्वं गतिषु न सज्जनोपचारे ।
कार्कश्यं कुचयुगले न चापि यस्याः,
भङ्गोऽभूवलकचये न चापि शीले ॥१३॥

अनुकूला विमलाङ्गी, कुलजा कुशला सुशीलसम्पन्ना ।
पञ्च लक्षणा भार्या, पुरुषः पुण्योदयाल्लभते ॥१४॥

साध्वी शीलवती दयावसुमति, दक्षिण्यलज्जावती,
तन्वी पापपराङ्मुखी स्मितमति, मुग्धा प्रियालापिनी ।
देवे वा गुरुबन्धुसज्जनरता, यस्यास्ति भार्या गृहे,

तस्यार्थागम काममोक्ष फलदा, कुर्वन्ति पुण्यप्रिया ॥

कार्येषु मन्त्री करणे च दासी,
भक्तेषु माता शयनेषु वेश्या ।
धर्मे सहाया क्षमया धरित्री,
षट्कर्मयुक्ता च कुलाङ्गना हि ॥१६॥

स्त्रीसंसर्गदोषान् प्राह—

द्विपमिव हरिकान्ता, मङ्क्षु मीनं बकीव,
भुजगमिव मयूरी मूषकं वा विडाली ।
गिलति निकटवृत्तिः संयतं निर्दया स्त्री,
निकटमिति तन्नीयं सर्वदा वर्जनीयम् ॥१७॥

सिद्धिः काऽप्यजितेन्द्रियस्य किल न, स्यात्तिस्यनुष्ठीयते,
मुण्ड्वाऽमुत्रिकसिद्धयेऽक्षविजयो, वक्षः स च स्याद् ध्रुवम् ।
चेतः संयमनात्तपः श्रुतवतोऽप्येतच्च तावद् भवेद्,
यावत्पश्यति नाङ्गनामुखमिति, त्याज्याः स्त्रियो दूरतः ॥

प्रथयति भवमार्गं मुक्तिमार्गं रुणद्धि,
दमयति शुभबुद्धिं पापबुद्धिं विधत्ते ।
जनयति जनजल्पं स्लोकवृक्षं लुनीते,
वितरति किमु कष्टं, सङ्गति नाङ्गनानाम् ॥१९॥

चक्षु स्तेजो मयमिति मते, ऽन्य एवाग्निरक्ष्णो,
रेणाक्षीणां कथमितरथा, तत्कटाक्षाः सुधावत् ।
लीढा दृग्भ्यां ध्रुवमपि चरद् विश्वगप्यप्यपीयः,
स्वान्तं पुंसां पविवहनवद्, बभ्रुमन्तर्ज्वलन्ति ॥२०॥
ब्रह्मव्रतं मुमुक्षूणां, स्त्रीसंसर्गेण निश्चितं ।
मण्डूकः पन्नगेनेव, भीषणेन विनाश्यते ॥२१॥
चौराणामिव सांगत्यं, पुंसां सर्वस्वहारिणा ।
योगिना योषितां त्याज्यं, ब्रह्मचर्यप्रपालिना ॥२२॥
क्षणमात्रं न कर्तव्यं, संसर्गं योषितां क्वचित् ।
कलङ्ककारिणं निन्द्यं, ब्रह्मचर्यपरायणैः ॥२३॥
यतः संसर्गमात्रेण, स्त्रीणां संजायते सतां ।
कलङ्कं दुस्त्यजं लोके, प्राणसन्देह एव च ॥२४॥
स्वयं साधोः स्थिरत्वेऽपि, संसर्गप्राप्तभ्रष्टता ।
क्षिप्रं विभावसोः सङ्गे, सा लाक्षेव विलीयते ॥२५॥
तपःश्रुतकृताभ्यासा, ध्यानधैर्यावलम्बिनः ।
श्रूयन्ते यमिनः पूर्वं, योषाभिः कश्मलीकृताः ॥२६॥
नवनीतनिभं पुंसां, मनः सद्यो विलीयते ।
वनितावह्निसंतप्तं, सतामपि न संशयः

सत्त्वं रेतश्छलात् पुंसां, घृतवद् द्रवति द्रुतम् ।
विवेकः सूतवत् क्वापि,याति योषाग्नियोगतः ॥२७॥
अन्तःसुप्तोऽपि जागर्ति, स्मरः सङ्गेन योषितां ।
रोगव्रज इवापथ्य–सेवासंभावितात्मनाम् ॥२८॥
क्रियते यैर्मनः स्वस्थं, श्रुतप्रशमसंयमैः ।
तेऽपि संसर्गमासाद्य, वनितानां वशं गताः ॥२९॥
एकत्र वसतिः साध्वी, वरं व्याघ्रोरगैः सह ।
पिशाचैर्वा न नारीभि, र्निमेषमपि शस्यते ॥३०॥
चित्रमेकगुणस्नेह–मपि संयमिनां मनः ।
यथा तथा प्रविश्य स्त्री, करोति स्वमयं क्षणात् ॥३१॥
कणिकामिव कर्कट्या गन्धमात्रमपि स्त्रियः ।
स्वादुशुद्धां मुनेश्चित्त,–वृत्ति व्यर्थीकरोत्यरम् ॥ ३३॥
यस्याः संसर्गमात्रेण, यतिभावः कलङ्क्यते ।
तस्याः किं न कथालापै, र्भ्रूभङ्गैश्चारुविभ्रमैः ॥३४॥
नारीसंसर्गमात्रेण, बहवो योगिनो भुवि ।
नष्टाः श्वभ्रं गता केचित्, श्रूयन्ते श्रीजिनागमे ॥३५॥

कामिनीकटाक्षनिरीक्षणादिपरम्परया पुंसः तन्मयत्वपरिणति–मावेदयति–

यासां संकल्पलेशोऽपि, तनोति मदनज्वरम् ।
प्रत्यासत्ति नं किं तासां, रुणद्धि चरणश्रियम् ॥३६॥
यस्तपस्वी व्रती मौनी, संवृतात्मा जितेन्द्रियः ।
कलङ्कयति निःशङ्कं, स्त्रीसक्तः सोऽपि संयमम् ॥३७॥
नूनं नृणां हृदि जवान्, निपतन्नपाङ्गः,
स्त्रीणां विषं वमति किञ्चिदचिन्त्यशक्तिः ।
नो चेत् कथं गलितसद्गुरुवाक्यमन्त्रा,
जन्मान्तरेष्वपि चकास्ति न चेतनाऽन्तः ॥३८॥
मासे मासे व्यतिक्रान्ते, यः पिबत्यम्बु केवलं ।
विमुह्यति नरः सोऽपि, सङ्गमासाद्य सुभ्रुवः ॥
सर्वत्राऽप्युपचीयन्ते, संयमाद्यास्तपस्विनाम् ।
गुणाः किन्त्वङ्गनासङ्गं, प्राप्य यान्ति क्षयं क्षणात्॥३९॥
कामिन्या कटाक्षनिरीक्षणद्वारेण तत्क्षणात् नरहृदये स्वरूपाभिव्यक्ति कर्तुं स्वशक्तिं प्रकटयति-
हृद्यभिव्यञ्जती सद्यः स्वं पुंसोऽपाङ्गवल्गितैः ।
सत्कार्यवादमाहत्य, कान्ता सत्यापयत्यहो ॥४०॥
कामिनीचेष्टाविशेषो महामोहावेशं करोतीति बोधयति
वंदग्धीमयनर्मवक्रिमचमत्कार क्षरत् स्वाविमाः,

सभ्रूलास्यरसाः स्मितद्युतिकिरो दूरे गिरः सुभ्रुवाम् ।
तच्छ्रोणिस्तनभारमध्यमोद्दाम क्वणन्मेखला,
मञ्जीराकुलितोऽपि मङ्क्षु निपतेत् मोहान्धकूपे न कः ।

वरवर्णिनीपरिरम्भानुभावयति

पश्चाद बहिर्वरारो, हार्दोःपाशेन तनीयसा ।
बध्यतेऽन्तः पुमान् पूर्वं, मोहपाशेन भूयसा ॥ ४२॥

स्त्रीदृष्ट्यादिदोषानुपसंगृह्णन्नाह-

दृष्टिविद्दृष्टिरिव दृक्कृत्याक्त् संकथाग्निवत्सङ्गः ।
स्त्रीणामिति सूत्रं स्मर नामाऽपि गृहवह्निरिव वक्तव्यम् ॥
दृष्टिपातो भवेदादौ, व्यामुह्यति मनस्ततः ।
सरागः कुरुते पश्चात्, तत्कथागुणकीर्तनं ॥४४॥
ततः प्रेमानुबन्धः प्रवर्धते ह्युभयोस्ततः ।
उत्कण्ठते शुभं चेतः, कामभोगादिकेवलम् ॥४५॥
दानदाक्षिण्यवार्ताद्यैः-रुभयो वर्धते स्मरः
ततः कामाभिलाषेण, परा प्रीतिश्च जायते ॥४६॥
तथा मिलति चान्योऽन्यं, मानसं कामलालसं ।
प्रणश्यति ततो लज्जा, कन्दर्पशरताडिता ॥४७॥
निर्लज्जः कुरुते कर्म, रहो जल्पनमन्वहम् ।

तरंगश्चतश्च कामाग्नि, दुर्निवारो विजृम्भते ॥४८॥
दह्यमानस्ततस्तेन, बहिरन्तः स्मर निश्च। ।
अविचार्यतया वाशु, वर्तते निन्द्यकर्मणि ॥४९॥
तेन श्रुतं तपः शीलं, कुलं च कुलमुत्तमम् ।
इन्धनी कुरुते मूढः प्रविश्य स्त्रीबिलानले ॥५०॥
विदित्वेति न पश्यन्ति, कामिनीं ब्रह्मचारिणः ।
क्वचिद् दृष्टिविषाहिनि–वाविलानवंकारिणीम् ॥५१॥
धन्यास्ते एव लोकेऽस्मिन्, यैर्ब्रह्म निर्मलं क्वचित् ।
स्वप्नेऽप्युपद्रितैः स्त्रीभि, नं नीतं मलसन्निधी ॥५२॥
न केवलं बुधैस्त्याज्यः, संसर्गो योषितामिह
किन्तु निःशीलपुंसां च, सङ्गो लोकद्वयान्तकृत् ॥५३॥
ब्रह्मचर्य विशुद्धयर्थं, सङ्गः स्त्रीणां न केवलं ।
त्याज्यः पुंसामपि प्रायो, विटविद्यावलम्बिनाम् ॥५४॥

शीलभ्रष्टफलमाह–

कुले कलङ्कं परलोकदुःखं,
यशः श्रुति धर्मधनस्य हानिः ।
नीचास्पदत्वं स्वजने विरोधो,
भवन्ति दुःखानि कुशीलयुक्ते ॥५५॥

मदान्धैः कामुकैः पापैं वंञ्चकैं मार्गविच्युतैः ।
स्तब्धलुब्धाधमैः सार्धं, सङ्गो लोकद्वयान्तकः ॥५६॥

रमणीयमिदं मत्वा, स्त्रीरूपं बहिरुज्ज्वलं ।
पतन्तस्तत्र नश्यन्ति, पतङ्गा इव कामुकाः ॥५७॥

अशुचिभावनामाह

कुष्ठव्रणमिवाजस्रं, वाति स्रवति पूतिकम् ।
यत्स्त्रीणां जघनद्वारं, रतये तद्धि रागिणाम् ॥५८॥

वक्तुमपि लज्जनीये, दुर्गन्धे मूत्रशोणितद्वारे ।
जघनबिले वनितानां, रमते बालो न तत्त्वज्ञः ॥५९॥

योनिरन्ध्रमिदं स्त्रीणां, दुर्गते र्द्वारमग्रिमम् ।
तत् त्यजन्ति ध्रुवं धन्या, न दीना दैववञ्चिताः ॥७०॥

स्रवन्मूत्रादिदुर्गन्धं, योनिरन्ध्रं घृणास्पदं ।
श्वभ्रागारमिवाऽसारं, कथं स्याद् रतये सताम् ॥६१॥

कुथितकुणपगन्धं योषितां योनिरन्ध्रं,
कृमिकुलशतपूर्णं निर्झरत्क्षारवारि ।
त्यजति मुनिनिकायः क्षीणजन्मप्रबन्धो,
भजति मदनवीरप्रेरितोऽङ्गी वराकः ॥६२॥

अहो ! घृणास्पदं निन्द्यं, लालाम्बुकर्दमीकृतं ।
श्लेष्मागारं च दुर्गन्धं, स्त्रीमुखं कः प्रशस्यते ॥६३॥
सूक्ष्मा अलब्धपर्याप्ता, जायन्ते मानवाः सदा ।
योनौ नाभौ च कक्षायां, विश्वस्त्रीणां स्तनान्तरे ॥६४॥
तेषु सर्वप्रदेशेषु, म्रियन्ते जन्तुराशयः ।
लिङ्गहस्तादिसंस्पर्शा—दित्युक्तं स्वागमे जिनैः॥६५॥
"मांसपिण्डौ कुचौ स्त्रीणां, मांसशोणितसंभृतौ"
गौरं चर्मावृतं कान्तं, वस्त्राभरणमण्डितम् ।
स्त्रीरूपं त्वं मुने ! वीक्ष्य, तस्यान्तस्थं विचारय ॥६६॥
"स्रवन् मूत्रादिदुर्गन्धं, योनिरन्ध्रं घृणास्पदं"
गोगर्भाद् व्यजनैकवंशिकमुपस्कारोज्ज्वलं कैशिकं,
पादूकृद्गृहगन्धिमास्यमसकृत्ताम्बूलवासोत्कटम् ।
मूर्तिश्चाजिनकृद् इति,प्रतिकृतिं संस्काररम्या क्षणाद्,
व्याञ्जिष्यन्न नृणां यदि स्वयमृते कस्तर्ह्यदस्थारयत् ॥
कुचौ मांसग्रन्थी कनककलशावित्यभिसरन्,
सुधास्यन्दीत्यङ्गव्रणमुखक्लेदकलुषम् ।
पिबन्नोष्ठं गच्छन्नपि रमणमित्यार्तवपथम्,
मगं धिक् कामान्धः स्वमनु मनुते स्वःपतिमपि ॥६८॥

विण्मन्दिक्लेदविश्राम्यति युवतिवपुश्च भ्रमूभागभाजि,
क्लेशाग्निक्लान्त जन्तुव्रजयुजि, रुधिरोद्गारगर्हीद्धुरायां ।
आह्नूनो योनिरन्ध्रां प्रकुपितकरणनवर्गोप्रे रसर्गोः,
मूर्च्छालिः स्वस्य बालः कथमनुगुणयेद् वं तरं वेत्र्यान्याम् ॥
वर्चःपाकचरं जुगुप्स्यत्रसति प्रस्वेदधारागृहं,
बीभत्सैकविभात्रभावनिवहं निर्माय नारीवपु ।
वेधा वेधि सरोसृजीति तदुपस्कारैकसारं जगत्,
को वा क्लेशमवं तिशर्मणि रतः संप्रत्ययप्रत्यये ॥७०॥
रेतःशोणितसंभवे बृहदणुस्रोतःप्रणालीगलद्,
गर्होद्गारमलोपलक्षितनिभान्त भागभाग्योदये ।
तन्वङ्गीवपुषीन्द्रजालवदलं भ्रान्तो सजन्त्यां दृशि,
प्रागुन्मीलति तत्त्वदृग् यदि गले मोहस्य दत्तं पदम ॥७१॥

वृद्धसेवाप्रशंसामाह

लोकद्वयविशुद्धयर्थं भावशुद्धयर्थमञ्जसा ।
विद्याविनयवृद्धयर्थं वृद्धसेवैव शस्यते ॥७२॥
अभिवादनशीलस्य, नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्धन्ते, आयुर्विद्यायशोबलम् ॥७३॥
दहति दुरितकक्षं, कर्मबन्धं लुनीते ।

वितरति धर्मसिद्धिं, ध्यानशुद्धिं तनोति ॥७४॥
नयति जननतीरं, ज्ञानराज्यं च दत्ते ।
ध्रुवमिह मनुजानां, वृद्धसेवैव साध्वी ॥७५॥
साक्षाद् वृद्धानुसेवेयं, मातेव हितकारिणी ।
विनेत्री वागिशाप्तानां, दीपिकेवार्थदर्शिनी ॥७६॥
कदाचिद् वं ःवंकुल्याद् मातोऽपि विकृतिं भजेत् ।
न देशकालयोः क्वापि, वृद्धसेवा कृता सती ॥७७॥
तपः कुर्वन्तु वा मा वा, चेद् वृद्धान् समुपासते ।
तीर्त्वा व्यसनकान्तारं, यान्ति पुण्यां गतिं नराः ॥७८॥
एकैव महतां सेवा, स्याज्जेत्री भुवनत्रये ।
यथैव यमिनामुच्चै- रासज्योति विजृम्भते ॥७९॥
तत्त्वे तपसि वैराग्ये, परां प्रीतिं समश्नुते ।
हृदि स्फुरति यस्योच्चै- र्वृद्धवाग्दीपसन्ततिः ॥८०॥
वृद्धानुजीविनामेव स्युश्चारित्रादिसम्पदः ।
भवत्यपि च निर्लेपं, मनः क्रोधादिकश्मलैः ॥८१॥
यथा यथा मुनिर्धत्ते, चेतः सत्सङ्गवासितं ।
तथा तथा तपोलक्ष्मीः परां प्रीतिं प्रकाशयेत् ॥८२॥
वृद्धोपदेशघर्मांशु, प्राप्य चित्तकुशेशयम् ।

न प्रबोधि कथं तत्र, संयमश्रीः स्थिति दधे ॥८३॥
अध्ययनादिसमुद्भूतं, क्षीयते निबिडं तमः ।
वृद्धानुयायिनां च स्याद्, विश्वतत्त्वैकनिश्चयः ॥८४॥
तन्न लोके परं धाम, न तत्कल्याणमद्भुतं ।
यद्योगिपदराजीव-संश्रितैर्नाधिगम्यते ॥८५॥
कषायदहनः शान्तिं, याति रागादिभिः समं ।
चेतः प्रसत्तिमाधत्ते, वृद्धसेवावलम्बिनाम् ॥८६॥
अनुपास्यैव यो वृद्ध-मण्डलीं मन्दबोधकः ।
जगत्तत्त्वस्थितिं वेत्ति, स मिमीते नभः करैः ॥८७॥
कुर्वन्नपि तपस्तीव्रं, विदन्नपि श्रुतार्णवं ।
नासादयति कल्याणं, चेद् वृद्धानवमन्यते ॥८८॥

सातत्यकुशलकामस्य मुमुक्षोः मोक्षमार्गनिर्वहणचणानां परिचरणमत्यन्तकरणतया प्रागुपक्षिपति

स्वान्तकाङ्क्षितनाशयाः सुगुरवाग्वृत्तयस्तचेतःश्रयाः,
संसारार्तिवृहद्द्रुयाः परहितव्यापारनित्योच्छयाः ।
प्रत्यासन्नमहोदयाः समरसीभावानुभावोदयः
सेव्याः शश्वदिह त्वयाऽऽहतनयाः श्रेयः प्रबन्धोत्सया ॥८९॥

वृद्धलक्षणमाह

तपःश्रुतधृतिध्यान–विवेकयमसंयमैः ।
ये वृद्धास्तेऽत्र शस्यन्ते, न पुनः पलिताङ्कुरैः ॥९०॥
स्फुरत्तत्त्वनिकषोद्भूतं, विवेकालोकवर्द्धितं ।
येषां बोधमयं चक्षुस्ते वृद्धा विदुषां मताः ॥९१॥
प्रत्यासत्ति समायातै, विषयैः स्वान्तरञ्जकैः ।
न हि स्वप्नेऽपि संयाता, येषां स्वृवृत्तवाच्यता ॥९२॥

अथ वृद्धेतरसंगत्योः फलविशेषमभिलपति–

कालुष्यं पुंस्युदीर्णं, जल इव कतकैः, सङ्गमाद् व्येति वृद्धैः,
अश्मक्षेपादिवाम्–प्रशममपि लघू–देति तत्त्विङ्गसङ्गात् ।
वार्भिर्गन्धो मृदीवोद्–भवति च युवभिस्तत्र लीनोऽपि योगाद्
रागो द्राग्वृद्धसङ्गात्, सरटवदुपल–क्षेपतश्चैति शान्तिम् ॥

गुणातिशयशालिनोऽपि तरुणस्य प्रायः यौवने विकारकारित्वप्रसिद्धे स्तदेव प्रकाशयन् प्राह–

अभ्युद्यद्गुणरत्नराशिरुरपि, स्वच्छः कुलीनोऽपि ना,
नव्येनाम्बुधिरिन्दुनेव वयसा, संक्षोभ्यमानः शनैः ।
आशाचक्रविवर्ति–गर्जितजलाऽऽभोगः स्ववृत्त्यापगाः,
पुण्यात्माः प्रतिलोमयन् विधुर–त्यात्माश्रयान् प्रायशः ॥

प्रायोयौवनफलं दर्शयति

अवश्यं यौवनस्थेन क्लीबेनापि हि जन्तुना ।
विकारः खलु कर्तव्यो, नाविकाराय यौवनं ॥९६॥
"यौवने तु क्वचित् कुर्याद् ,दृष्टतरक्षोऽपि विक्रियाम्"

यौवनयापनविधिमाह-

यस्मिन्नुरजः प्रसरति प्र लितार्कबिम्बोच्चैः-
प्राच्यधादिव प्रबलता तमसश्चकास्ति ।
सर्वं तिरोभवति भीतमिवाङ्गजाग्नेः,
तद्यौवनं विनय सज्जनसङ्गमेन ॥९७॥

ताहृष्येऽप्यविकारिणं पुरुषं प्रणौति

दुर्गेऽपि यौवनवने विहरन् विवेक-
चिन्तामणिं स्फुटमहत्वमवाप्य धन्यः,
चिन्तानुरूपगुणसम्पदुरुप्रभावो ।
वृद्धो भवत्यपलितोऽपि जगद्विनतया ॥९८॥

असाधुसाधुसङ्गतिफलं दृष्टान्तेन स्फुटयति

सुशीलोऽपि कुशीलः स्याद्, दुर्गोष्ठ्या चारुदत्तवत् ।
कुशीलोऽपि सुशीलः स्यात्, सद्गोष्ठ्या मारिदत्तवत् ॥
कातरत्वं परित्यज्य, धैर्यमेवावलम्बते ।
सत्सङ्गजपरिज्ञान-रञ्जितात्मा जनः स्वयम् ॥१००॥

विशःविद्यासु चातुर्यं, विनयेऽप्रतिकौशलं ।
भावशुद्धिः स्वसिद्धान्ते, सत्सङ्गादेव देहिनाम् ॥
गुणदोषौ प्रजायेते, संसर्गवशतो यतः ।
संसर्गः पावनः कार्यो, विमुच्याऽपावनं ततः ॥१॥
वरं सयन्ततः प्राप्ता, निन्दा संयमसाधनी ।
न त्वसयततः पूजा, शीलसंयमनाशिनी ॥२॥
"पूजां सज्जनसङ्गेन, दुर्जनोऽपि प्रपद्यते"
"दुष्टोऽपि मुच्यते दोषं, स्वकीयं शिष्टसङ्गतः"
क्षमादिलक्षणैः सारं दशभि सोत्तमं महान् ।
साध्यते मुक्तिकृद् धर्मो, निर्मोहै र्मुनिपुङ्गवैः ॥३॥
अयं दक्ष ! त्वया नित्यं, क्षमादिदशलक्षणैः ।
धर्मकल्पद्रुमः सेव्यो, निर्वाणफलसिद्धये ॥४॥

ॐ ह्रीं उत्तमब्रह्मचर्यधर्माङ्गाय नमः

स्त्रीःसक्तं विजनःपूज्यं, ब्रह्मचर्यं गुणार्णवं ।
पूजया परया भक्त्या, पूजयामि श्रदाप्तये ॥
ॐ ह्रीं परमब्रह्मणे उत्तमब्रह्मचर्यधर्माङ्गाय
नमः जलाद्यर्घ्यं निर्वपामीति स्वाहा ।

अथधर्मफलमाह

धर्मो धामनि संवत्ते शर्माऽऽधारे शरीरिणां ।
निर्मितो वाङ्मनःकाय-कर्मभिः शुभवृत्तिभिः ॥१॥

यद् दूरं दुर्लभं सर्वं, चानर्घ्यं भुवनत्रये ।
तद्वस्तु स्वयमायाति, धर्मात् करतले सतां ॥२॥

कलाविज्ञानचातुर्य-विवेकोऽपशमादयः ।
नानासंवेगवैराग्या वर्धन्ते धर्मतः सताम् ॥३॥

विद्या तपो धनं शौर्यं, कुलीनत्वमरोगिता ।
राज्यं स्वर्गश्च मोक्षश्च, सर्वं धर्मादवाप्यते ॥४॥

विश्वश्लाघ्य कुलं धर्माद्, धर्माज्जाति र्मनोरमा ।
काम्यं रूपं भवेद् धर्मात्, धर्मात् सौभाग्यमद्भुतम् ॥५॥

धर्माज्जन्म कुले शरीरपटुता, सौभाग्यमायुर्बलं,
धर्मेणैव भवन्ति निर्मलयशो, विद्यार्थसम्पत्तयः ।
कान्ताराच्च महाभयाच्च सततं, धर्मः परित्रायते,
धर्मः सम्यगुपासितो हि भविनां, स्वर्गापवर्गप्रदः ॥६॥

कुलं विश्वश्लाघ्यं वपुरपगदं जातिरमला,
सुरूपं सौभाग्यं ललितललना भोग्यकमला ।
चिरायुस्तारुण्यं बलमविकलं स्थानमतुलं,
यदन्यच्च श्रेयो भवति भविनां धर्मत इदम् ॥७॥